काव्यान्ते च स्वपरिचायकं पद्यद्वितयं ग्रथितमेतेन महाकविना यथा—

यद्वाणीश्रुतिमात्रकेण सुधियां चेतश्चमत्कारिणी
येनामुद्रि विरोधिनां मुखकुलं स्वोद्गारकौतूहलैः ।
तेनाज्ञानघनान्धकारपटलप्रक्षेपदीपाङ्कुरं
व्यातेने कृतिनां कृते सुकृतिना काव्यं शिवस्वामिना ॥२०, ४६॥

अन्यच्च— विदितबहुकथार्थश्चित्रकाव्योपदेष्टा
यमककविरगम्यश्चारुसन्दानभाणी[1] ।
अनुकृतरघुकारोऽभ्यस्तमेण्ठप्रचारो
जयति कविरुदारो दण्डिदण्डः शिवाङ्कः ॥२०, ४७॥

एकमन्यदपि पद्यं भाण्डारकरविवृते(१८९७)रेकादशे पृष्ठे कविकण्ठाभरणस्य (काव्यमालाङ्कः ४) च १३२तमे पृष्ठे समुपलभ्यते—

वाक्यानि[2] द्विपदीयुतान्यथ महाकाव्यानि सप्त क्रमात्
त्र्यक्षप्रत्यहनिर्मितस्तुतिकथालक्षाणि चैकादश ।
कृत्वा नाटकनाटिकाप्रकरणप्रायान् प्रबन्धान् बहून्
विश्राम्यत्यधुनापि नातिशयिता वाणी शिवस्वामिनः ॥

प्रथमचरमसर्गान्तपुष्पिकावचनं 'स्तोत्राह्निकाङ्कस्य' इत्येतत् 'त्र्यक्षप्रत्यहनिर्मितस्तुतिकथा'–इत्यनेन संघटते[3] । सुभाषितावलिषु कोषटीकासु चाप्यस्य कवेः कृतीनां बहूनि पद्यान्युदाहृतान्युपलभ्यन्ते । तानि प्रतीकसूचिकायां (XX–XXI पृष्ठयोः) द्रष्टव्यानि । काव्यप्रकाशकृता मम्मटेन 'भद्रात्मनः', 'उल्लास्य काल–', 'दर्पान्धगन्ध–', 'अत्यायतैः' इत्यादि पद्यचतुष्टयं कप्फिणाभ्युदयप्रथमसर्गस्थमुदाहृतम् । तेनापि खलु न क्वचिदपि काव्यमिदं नामतो निर्दिष्टम् । इतः पूर्वं चैतेषामुद्धरणमूलमविदितमेवासीद्विदुषाम् । एभिरुद्धरणैरेतदपि सम्यक् स्फुटीभवति यदनेन महाकविनाऽन्येऽपि बहवो ग्रन्था निर्मिता ये कालयवनिकाच्छन्नवपुषो नेदानीमुपलब्धुं शक्यन्ते ।

अयं महाकविः शिवस्वामी हरविजयकर्तू रत्नाकरस्य समकालीनः । पूर्वजैः कालिदासभारविमाघप्रभृतिभिरसौ कियान् प्रभावित इति LI–LXI पृष्ठेषूदाहृतैर्माघहरविजयपद्यैः सम्यग् विशदीभवति ।

---

१ सन्दानमिति सन्दानितकवाचि स्यात् ।

२ 'काव्यानि' इत्यनुमीयते पाठः ।

३ अत्र प्रोफ़ैस्सर-टामस-सम्पादितकवीन्द्रवचनसमुच्चयभूमिकानुशीलयितव्या ।

| तद्यथा भावसाम्यम् | शिवस्वामिनः | रत्नाकरस्य |
|---|---|---|
| नगरीवर्णने | शय्यालयेषु... ... (१,१४) | शय्यागृहं ... ... (१,१६) |
| सभाक्षोभवर्णने | तत्रत्यैश्चकित– ... (३,२८) | रोषारुणी– ... ... (७,१३) |
| सभाक्षोभवर्णने | अन्तःस्थ– ... ... (३,१६) | क्रोषावलम्बस्य ... (६,६३) |
| नरेन्द्रवर्णने | उल्लास्य काल– ... (१,२४) | अभ्येयुषां ... ... (१६,३६)<br>फूत्कारपावक–...(१६,७४) |
| चन्द्रोदयवर्णने | श्यामां ... ... (१२,१५) | ध्वस्तान्धकार–.... (२०,४७) |
| प्रसाधनवर्णने | मृगीदृशां ... ... (१२,३६) | आह्लादहेतु... ... (२३,४६) |
| प्रभातवर्णने | प्राचीश्वासो– ... (१५,१८) | उदयशिखरि– ... (२८,८०) |
| वनविहारवर्णने | त्विषानया ... ... (६,१६) | विभ्राणै– ... ... (१७,५२) |
| अपरश्च | शिवस्वामिनः | माघस्य (शिशुपालवधे) |
| निर्झरवर्णने | प्राग्भारदीर्घ– ... (६,५५) | प्राग्भागतः ... ... (४,४६) |
| प्रदोष वर्णने | दिव इव ... ... (११,३०) | व्यसरन्नु ... ... (६,१६) |
| चन्द्रोदयवर्णने | कृतोपकारे ... ... (१२,१८) | रजनीमवाप्य... ...(६,३३) |
| सलिलक्रीडावर्णने | मुखपतित– ... (१०,१४) | आघ्राय ... ... (८,१०) |
| कुसुमावचयवर्णने | तनुत्विषो ... ... (६,३५) | अवजितमधुना ... (७,६०) |

एवं सम्यक् तुलितानां तेषामन्यत्रापि समानशैलीकत्वं पूर्वस्यापरत्र प्रभावश्च च प्रकटयितुं शक्यते। एतत्तु दिङ्मात्रमेव दर्शितम्। महाकाव्यमिदं श्रीचन्द्रमित्रबौद्धभिक्षोः प्रेरणयैव विरचितमिति ग्रन्थकर्तुः प्रशस्तेर्ज्ञायते। एतेनै-तदपि प्रतीयते यदयं महाकविः स्वसमकालीनबौद्धभिक्षुभिरवश्यं प्रभावितो-ऽभूत्। काव्यमिदं भगवतो बुद्धस्योपदेशेनोपसंहृतम्। अत्र भगवता बुद्धेनावदान-शतकवत् कप्फिणस्य कृते भिक्षुवृत्तेरुपदेशो न कृतोऽर्हत्त्वं चास्य न सम्पादितम्। परं गृहस्थधर्म एव संभवतो बोधिसत्त्वमतमवलम्ब्य तत्समक्षं समुपस्थापितः।

अस्य काव्यस्यैकोनविंशः सर्गः संस्कृतप्राकृतमिश्रितभाषया निबद्धोऽस्ति। भट्टिकृतरावणवधमहाकाव्यस्य त्रयोदशसर्गसरणिरत्र प्रायः स्वीकृता शिवस्वा-मिना। रैवताद्रिं माघो यथा दारुकस्य, हिमालयं यथा भारविर्यक्षस्य तथैव शिवस्वामी मलयाचलं विद्याधरस्य मुखेन वर्णयामास। माघशिवस्वामिनोः पर्वतवर्णनात्मकयोः सर्गयोः छन्दःक्रमोऽपि न भिन्नः, प्राय एकान्तरयमकनिवेश-दर्शनात्। यथा भारविणा सर्गान्तिमपद्ये लक्ष्मीशब्दो माघेन श्रीशब्दो रत्नाकरेण रत्नशब्दः प्रयुक्तस्तथा शिवस्वामिना शिवशब्दः। अत एवासौ 'शिवाङ्क' इत्युप-पदविभूषितोऽभूत्।

हरविजयकप्फिणाभ्युदययोः सर्गाणां विषयक्रमोऽपि समानप्राय एव।

| हरविजयम् | कप्फिणाभ्युदयम् |
| --- | --- |
| १ शिवाभ्यर्थना ज्योत्स्नावत्या नगर्यास्तत्स्वामिनश्च वर्णनम् | १ बुद्धाभ्यर्थना लीलावत्या नगर्यास्तत्स्वामिनश्च वर्णनम् |
| ७ अन्धकासुरपराजितेषु देवेषु शिवपरिषदि स्वदुर्दशामुपवर्णितवत्सु वीरभद्रकालमुसलादिगणानां क्रोधवर्णनम् । | २ दूतेन प्रसेनजितः कप्फिणं प्रति विरोधे दर्शिते राजसभायां सुबाहुदर्शकादिगणानां क्रोधावेशवर्णनम् । |
| ९–१६ कालमुसलनीतिमनुसृत्यान्धकाक्रमणविधानम् । अन्ते च कालमुसलस्य दौत्येनान्धकान्तिके प्रेषणनिर्णयः । | ४–५ सुबाहुविमर्शेनाविलम्बितं प्रसेनजिदाक्रमणविधिः । अन्ते च दर्शकस्य दौत्येन प्रसेनजितत्पार्श्वे प्रेषणनिर्णयः । |
| ३०–३८ कालामुसलस्य स्वर्गयात्रा । अन्धकसंगमः । देवसंदेशश्रावणम् । तयोश्चोत्तरप्रत्युत्तरवर्णनम् । | १६–दर्शकस्य श्रावस्तीयात्रा । प्रसेनजित्सङ्गमः । सन्देशश्रावणम् । तयोश्चोत्तरप्रत्युत्तरवर्णनम् । दर्शकस्य क्रोधाविष्टस्य प्रत्यावर्तनम् । |
| ३९–५० सैन्यसंभारप्रस्थानपूर्वकं युद्धवर्णनम् । | १७–१८ युद्धवर्णनम् |

प्रस्तुतकथामनुसृत्यैवैतत् साम्यं वर्णितम् । महाकाव्यनियतपद्धतिमनुसरतोः रत्नाकरशिवस्वामिनोः ग्रन्थयोः पर्वतवर्णनं कुसुमावचयजलविहारसन्ध्याचन्द्रोदयमधुपानकामक्रीडाप्रभातवर्णनान्यपि भूयः साम्यं वहन्तीति दिङ्मात्रं निदर्शितम् ।

कथंकारं काव्यमेतत् स्वजन्मभूम्यां काश्मीरेषु लुप्तप्रायं बभूव, कथं च नाद्यावधि मल्लिनाथप्रभृतीनां टीकाकृत्प्रवराणां केनापि टीकया सनाथीकृतमिति विचिकित्सायां काव्यस्यास्योपेक्षाया हेतुरस्य बौद्धकथाश्रितत्वमेवेत्यनुमीयते । परमुपेक्षितृणामेष भ्रम एव आसीत् । यत एतत्काव्याश्रिता सरणिरार्यधर्मस्य व्यापकतां द्योतयन्ती आपन्नबौद्धयानस्यान्यसम्प्रदायरूपतया परिणतौ सहायिकाऽभूत् ।

---

१ उपलब्धोड़ियालिपिबद्धपुस्तकादनुमीयते यदयं ग्रन्थः बौद्धैर्मानितः । यतः भारतस्य प्राच्यप्रान्तेष्वेव बौद्धधर्मो विदेशीयाक्रमणेभ्यः सुरक्षितः । द्वादशशताब्दीपर्यन्तं च विहारप्रान्ते स जीवन्मृत इव जीवनमुवाहेति ऐतिहासिकाः । नेपालराज्यं च परमं शरणं भीतत्रस्तार्यसंस्कृतेरित्यनेनैवहेतुना नेवारीलिप्यां पुस्तकमेतदुपलभ्यते, काश्मीरेषु कप्फिणाभ्युदयस्य शङ्कुककृतभुवनाभ्युदयवत् समाना गतिरित्यलम् ।

आर्यधर्मादुदितो बौद्धो धर्मो भारते तस्मिन्नेव निलीन इति नाविदितमितिहासविदाम् । परमार्थधर्मस्य बौद्धधर्ममधिकृत्य पूर्वापरावस्थायां महदन्तरं जातम् । आर्योऽवतारवादस्तु बुद्धादर्वाचीन इति समीचीनं मतम् । तत्र च परमनास्तिकस्यापि बुद्धस्यावतारेषु गणना तात्कालिकं वैष्णवधर्मस्यावतारवादं पोषयति । पुराणेष्वपि भगवतो बुद्धस्यावतारत्वं स्वीकृतं वर्तते । क्षेमेन्द्रविरचितदशावतारचरितं चापि तात्कालिकमवतारवादं प्रमाणीकरोति । भगवान् बुद्धस्तदानीं कप्फिणं संन्यासमार्गमनुपदिश्य गृहस्थे प्रवर्तयामास । एतेनैतदपि प्रतीयते यत् शिवस्वामिसमये भगवतो बुद्धस्य गणना वैष्णवावतारेष्वेवासीत्, भिक्षुवृत्तिमपहाय गार्हस्थ्यं बुद्धाय रोचत इति सामयिकप्रभावो नतु शुद्धबुद्धोपदेशः । नवमशताब्द्यां काश्मीरेष्वेषैव भिक्षुधर्मदशा चासीत् ।

संक्षेपतः सर्वमिदं निर्दिष्टम् । अस्य महाकाव्यस्याऽविकलानुशीलनेनैव काव्यरसास्वादः विविधच्छन्दोवैचित्र्यं रीतिगुणालङ्कारचित्रचित्रणं रचनाचातुर्यं च सम्यगनुभूयते ।

अन्ते चास्माभिरेते सहृदया महानुभावाः सहर्षं धन्यवादैरभिनन्द्यन्ते यैरेतस्य महाकाव्यस्य प्रकाशने साहाय्यं कृत्वा वयं चिरमनुगृहीताः—प्रोफ़ैस्सर एफ़. डब्ल्यू. टामसमहोदया यैः प्रेरितोऽहमस्य प्रकाशने समर्थोऽभवम्, आक्सफोर्डविद्यालये तैर्महता परिश्रमेण समग्रमेतत् पुस्तकं मया सह सम्यगालोचितम्; नेपालमहाराजाधिराजराजगुरवः श्रीहेमराजपण्डितमहोदया यैः प्रेषितां स्वपुस्तकप्रतिलिपिं विनाऽस्य काव्यस्य बहूनां स्थलानां विशेषतश्चैकोनविंशसर्गस्य पूर्णता संदिग्धैवासीत्;—पञ्चनदीयविश्वविद्यालयस्योपाध्यक्षस्वर्गीय-डाक्टर ए. सी. वूल्नरमहोदया यैरस्य काव्यस्य विश्वविद्यालयद्वारा प्रकाशनं स्वीकार्य सत्परामर्शं दत्त्वा च वयमनुगृहीताः;—श्रीमन्तः कुशलापरनामधेया लवपुरीय ओरियण्टलकालेजेऽध्यापका रामचन्द्रशास्त्रिमहोदया यैरस्य सन्दिग्धस्थलेषु पाठसंशोधने सम्मतिं दत्त्वा 'प्रूफ़'संशोधनेऽपि साहाय्यं कृत्वा वयं महदुपकृताः;—इण्डिया आफ़िस-पुस्तकालयाध्यक्षा यैः पुरीपुस्तकालयात् काश्मीरेभ्यश्च प्रतिलिपिद्वयं प्रापितम्;—मद्रासराजकीयपुस्तकालयाध्यक्षाः कुप्पुस्वामिशास्त्रिमहोदया यैरस्य काव्यस्य हस्तलिखितपुस्तकत्रयम् उड़ियाभाषायामेकं देवनागर्यां च द्वे संप्रेष्यास्य प्रकाशने यशोऽर्जितम्;—पञ्जाबयूनिवर्सिटीपुस्तकालयाध्यक्षा यैः उडियामूलपुस्तकस्य चित्रप्रतिलिपिः (रोटोग्राफ इत्यभिधेया) कारिता;-श्रीजम्बूरघुनाथपाठशालोपाचार्यपण्डितश्रीचन्द्रतर्कतीर्थमहोदया यैरेतत्काव्यगतचित्रश्लोकानां तदनुसारीणि कतिपयचित्राणि निर्मितानि;—लवपुरीय-गवर्नमैण्टकालेजसंस्कृता-

ध्यापकाः श्रीप्रोफैस्सरगुलबहारसिंहमहोदया यैराङ्गलभाषाभूमिका महता परिश्रमेण पर्यालोचिता।

तदेवं सुदुर्लभस्याऽस्य काव्योत्तमस्य कथमपि प्रकाशनं कर्तुं पारितवानस्मीत्येव मन्ये नव्यकाव्यास्वादसमुत्सुकहृदां सहृदयानां महान्तं परितोषमावहेत्, तावतैव च मे परिश्रमोऽपि साफल्यमाप्नुयादित्याकलये।

इति निवेदयति विदुषामनुचरः
गौरीशङ्करः

गवर्न्मैण्ट कालेज,
लाहौर
मार्च २७, १९३६

# अथ कप्फिणाभ्युदयं महाकाव्यम् ।

## प्रथमः सर्गः ।

सर्वज्ञतादिगुणगोचरमाययौ या
ध्येया यतोऽपि यतिबन्धुरबोधि बोधिः ।
सा सत्यनिर्धुतचतुर्विधविभ्रमार्ति-
र्मूर्तिर्दशां दिशतु दाशबली शिवं वः ॥ १ ॥

अस्ति प्रथा परमदैत्यसुखायनान्तः-
स्यूता गजाननगुहावसिताऽधिविन्ध्यम् ।
लीलावतीति नगरी कलितापदाना
दुर्गेव भावितरणा हरिणाङ्कनेन ॥ २ ॥

या तुङ्गसौधतलकीलितकेतुदण्ड-
षण्डैर्जवाज्जलमुचामभिपातितानाम् ।

---

1–The manuscript M begins with stanza 1. In N the first folio is lost and the poem begins with stanza 12b. The transcript M2 begins with the third stanza. The transcript M3 begins with stanza I. M has in the beginning श्रीराधाकृष्णाभ्यां नमः; M2 has श्रीकृष्णाय नमः; M3 has श्रीकृष्णः शरणम् ॥

a,M is not clear on ज्ञ in सर्वज्ञता. It seems to read सर्वकता

c,M3 reads सामन्त्य for सा सत्य

2a,M reads नाभिः; नान्तः- or नाभि- is suggested.

उत्सङ्गिनीभिरवतंसपताकिकाभि-
र्बन्धं व्यधादिव दिवि व्रणपट्टिकाभिः ॥ ३ ॥
यत्रान्वकारि चलचीनजवैजयन्ती-
विन्याससारशिखरैर्भृशमैन्द्रनीलैः ।
ओकोभिराकुलमरुच्चलितद्युसिन्धु-
विक्षिप्तवीचिवलयस्य विहायसः श्रीः ॥ ४ ॥
दिग्दन्तिदानजलधूसरधाम्नि विन्ध्य-
स्कन्धे समिद्धमणिनद्धतलेन यस्याः ।
सौवर्णसानुवलयेन निकाषपट्ट-
मूर्च्छन्महारजतराजिरुचा विरेजे ॥ ५ ॥
तिष्ठन् यदङ्कभुवि चामरधूतमन्त-
स्तल्पोपभुक्तपटवासपरागपांसुम् ।
भृङ्गारवानिव गवाक्षमुखैः स्मयात् स्म
ताम्बूलमुद्गिरति विभ्रमवासवर्गः ॥ ६ ॥
यस्यां विलासभवनेषु गवाक्षजाल-
प्राज्यप्रवेशविशदाः क्षितिषु क्षपायाम् ।
कान्ताविमर्दसुरतत्रुटितावमुक्त-
मुक्तावलीविलसितं दधुरिन्दुपादाः ॥ ७ ॥
ध्वान्तानुविद्ध इव नीलशिलालयानां
भाभिः ससंन्ध्य इव शोणदृषद्गृहाणाम् ।
ज्योत्स्नावमृष्ट इव साधु च सौधधाम्नां
यामीयिवान् रविरहर्बुबुधे त्रियामाम् ॥ ८ ॥

---

3d,M has बन्धं व्याधात् M3 विद्धं व्यधात्
4c,M omits ल in आकुल
c,M3 मरुद्वल्लितेषु for मरुच्चलितद्यु
5b,M3 ०बद्ध for ०नद्ध० c,M3 साल for सानु०
6b,M पांशुम्
c,M3 स्मयात्स्म for सचूर्ण in M.
7d,M3 हारावली for मुक्तावली in M.
8d,M3 निशायां for त्रियामाम्

यत्रेन्द्रनीलमणिखण्डगवाक्षभाञ्जि
ज्योतीरसोद्वसितानि समत्वमापुः ।
कल्लोललोलनविलोलितकालकूट-
कालीकृताम्बुकुहरस्य पयःपयोधेः ॥ ९ ॥

श्यामाश्मवेश्मशिखरावलितुल्यकाल-
संकीर्णतारतरणिप्रतिमा बभौ या ।
कालीव कल्पविलयोत्सवकल्प्यमान-
वेषार्पितार्ककुलमण्डनमौलिमाल्या ॥ १० ॥

स्फारस्फुटस्फटिककूटकुटीनिविष्ट-
नीलाश्मनिर्मितगवाक्षमरीचिमिश्रा ।
या कालकण्ठरुचिसङ्करशङ्कराट्ट-
हासच्छटाभ्रपटलप्रतिमां बभार ॥ ११ ॥

रोचिष्णुनीलपटचञ्चलचीरचारु-
च्छायानिभा नभसि यत्र बभूव गङ्गा ।
उत्तालतालतलचुम्बितमेघभूषु
प्रासादपद्धतिषु शाश्वतवैजयन्ती ॥ १२ ॥

उद्घाटनोत्कटकवाटपुटध्वनीनि
व्यात्तानि नीलमणिमन्दिरगोपुराणि ।
यस्यां ददर्श विकसद्विकटाट्टहास-
सङ्कटराहुवदनावटतर्कतोऽर्कः ॥ १३ ॥

शय्यालयेष्वसितपद्मवतंसराजि-
र्यस्यां रराज रमणैरुपभुक्तमुक्ता ।

9d,M हा in कुहर
10c,M कल्पमान for कल्प्यमान
d,M3 मौलिमाला for मौलिमाल्या in M.
11M3 has मिश्राः and प्रतिमा in b and d.
12a,N begins with खीरचारु० The previous folios are lost.
b,M छायान्निभा c,N ०मेघभूपु M3 भूय M भूयः
13b,N omits व्यात्ता in व्यात्तानि

उद्दाममन्मथमहेभविकीर्णशीर्ण-
खेलस्खलत्स्फुटविशृङ्खलशृङ्खलश्रीः ॥ १४ ॥
आमुक्तमौक्तिककरालतलेषु यस्या-
मत्यन्तहारिषु हरिन्मणिकुट्टिमेषु ।
हिण्डीरपिण्डपरिपाण्डुतडागतोय-
तर्षप्रकर्षरभसाः पतगा निपेतुः ॥ १५ ॥
यत्रोपभोगभवनेषु विलासिनीनां
हेलाविमुक्तपरिकुण्डलिताकृतीनि ।
दामानि बभ्रुरभितो मणिमेखलानां
कन्दर्पकूवरिपरिच्युतचक्रलीलाम् ॥ १६ ॥
नीलाभ्रकाननकरालतमालवल्ली-
राकाशदिग्द्विरददाननदीरदीनाः ।
या साधु सौधपरिपाण्डुरपुण्डरीक-
षण्डालिनीरवहताऽगुरुधूमवेणीः ॥ १७ ॥
अच्छिन्नदानजलसन्ततिसिक्तभूमि-
रारूढदीर्घसुदृढप्रतिमानन्नैर्या ।
नीचैरगम्यगतिमुन्नतिमाश्रयद्भि-
र्भेजे गृहैर्जयगजैरिव राजलक्ष्मीः ॥ १८ ॥
या सप्तसप्तिरथसप्तिभिराकृतीनां
ज्योतीरसोपलभुवि प्रतिविम्बितानाम् ।
आलोकनेन बलमानबृहत्तुरङ्ग-
शङ्कैः स्वघोपघटया विभरांबभूवे ॥ १९ ॥

---

16b,N ०वमुक्ति for ०विमुक्त
b,M3 परिमण्डलित for परिकुण्डलित in M.
c,M3 भेजुः for बभ्रुः in M.
d,N चक्रलीनां for ०लीलां
18d,N भूजैः for भेजे
19b,N प्रतिफेलुपीणां and M3 प्रतिफेलुरासां for प्रतिविम्बितानाम्
c,N वहमानवृहत्तुरङ्गीशङ्कैः
M3 वहुमानवलत्तुरङ्गाशङ्कैः

दिग्दन्तिदन्तपरिणामनिखातदन्त-
भग्नप्रभाङ्कुरकरालतलानि यस्याम् ।
नीलाश्मतोरणतटानि विमुग्धहंसाः
स्वच्छाम्बुनूतनमृणालरसादपश्यन् ॥ २० ॥

लीनैर्विलासशयनीयगृहेषु यस्यां
लीलाविमर्दलुलितैर्नलिनावतंसैः ।
जग्मुः श्रियं मृगदृशां मकराङ्कमुक्तै-
राकर्षपाशवलयैरिव भूमिभागाः ॥ २१ ॥

स्पर्शैर्दिशन् कुसुमकार्मुकनर्मकर्म
घर्मोर्मिमर्मरितमर्मसु शर्मशीतैः ।
यत्राश्लिपन्मरुदनिर्मदनर्मदाम्बु-
कल्लोलशीकरकरालितशैलसानुः ॥ २२ ॥

तस्यामहीनकटकस्फुटवीरभद्र-
संपृक्तशक्तिमहिमा भृतभूतिशोभः ।
भूभृद्बभूव बहुदर्शनभोग्यमूर्तिः
श्रीकप्फिणः प्रभुरिवेन्दुकलावचूलः ॥ २३ ॥

उल्लास्य कालकरवालनवाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन ।
निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥ २४ ॥

---

20a,N निखातभग्नदन्त; b,N तरानि for तलानि; d,N विमुग्ध for निविष्ट in M.

21a,N and M3 नीलः for लीनैः; c,N ऊहुः for जहुः M3 जग्मुः

22d,N शैलसानुः M has शैलसारम्

23b,N मुक्तिशोभः; d,N चूलः M चूडः d, M reads कप्फण throughout. The i in Kapphiṇa is found in other texts; see the Introduction under the name Kapphiṇa.

24a, Kāvyaprakāśa has महाम्बुवाहं ।

24d,M3 ज्वलितप्रतापः

यः सङ्गरे गुरुभटोद्भटधैर्यधूति-
स्वाध्यायसाधनपरः प्रणवायमानम् ।
हुङ्कारमन्तकधनुर्ध्वनिदुष्प्रबोध-
सुप्ताहिताजगरजागरभुञ्जगार ॥ २५ ॥

उत्तान्यमानमनुबन्धकबन्धबन्ध-
स्कन्धोर्ध्वरन्ध्ररुधिरप्लुतिपूरदण्डैः ।
छायाविधायि धृतशौर्यगुणानुगुण्यं
तापं जहार भुवि यस्य यशोवितानम् ॥ २६ ॥

शूरप्रतापरविमण्डलराहुजिह्वा
वैकल्यतो रिपुभिराहवदेवताभ्रूः ।
प्रत्यर्थिकीर्तियमुनाबललाङ्गलाग्र-
लेखा व्यलोकि युधि यत्करवालवल्ली ॥ २७ ॥

दृप्तेभकुम्भनिपतत्करवालयष्टि-
निष्पिष्टमौक्तिकगणोद्गतधूलिलेखा ।
येनोच्छ्वसच्छिशिररश्मिमरीचिरोचि-
रुन्मीलिता नभसि कीर्तिरिव व्यलोकि ॥ २८ ॥

यः खड्गनिर्दलितनिष्ठुरवैरिकण्ठ-
निष्ठ्यूतमाचिपदनुष्ठिततन्त्रवृत्तिः ।
आत्मप्रतापपटजालनिविष्टसूत्र-
सन्तानतन्तुतुलयाऽस्रशिरासहस्रम् ॥ २९ ॥

---

25b,M पुरः for परः
cd,N दुर्धरौघग्रस्ता for दुष्प्रबोधसुप्ता
26a,N उत्तम्भ्यमानमनुबन्धि for the above reading.
b,M द्युतिसूरदण्डैः for प्लुतिपूरदण्डैः
M3 रुधिरोद्भटपूरवर्षैः
b,N स्कन्धान्धरन्ध्र
c,M श्रेया or प्रेया for छाया
27b,N & M3 वैह्वल्यतो for वैकल्यतो
M देवताभिः for देवताभ्रूः
d,M3 रेखा for लेखा
28b,M3 उद्धुत for उद्गत
c,N मयूखकान्ति for मरीचिरोचि
d,N उत्पेतुषी for उन्मीलिता
29b,M निष्ठित for this ०नुष्ठित is suggested.
c,M निविष्ट N विचित्र

अग्राहि नीव्रजविजर्जरकत्तकूट-
जूटैर्घटाघटितकाककुलात्तमालैः ।
दीत्तेव विद्धतविटङ्ककुटीकपोत-
भस्मात्रिपुण्डकधरैर्यदरातिसौधैः ॥ ३० ॥

शोकान्धशात्रववधूनयनप्रणाल-
निर्वाहितास्रजलसिक्ततयेव यस्य ।
शौर्यद्रुमः समधित द्विषतां गृहेषु
शाखाशिफानिबिडनीव्रमयीमवस्थाम् ॥ ३१ ॥

खेदाविला बकुलमाकुलतान्वितेन
चित्तेन चूतमतिमुक्तकमुक्तकष्टाः ।
शोकादशोकमवमान्नवमालिकाञ्च
त्यागे पुरां यदरियोषित आममन्त्रन् ॥ ३२ ॥

दीर्णद्विषद्द्विपशिरोविसृतैर्विशुद्ध-
सम्बन्धबन्धुभिरनुव्रजनेच्छयेव ।
आरोहतो नभसि यद्यशसः सितस्य
मुक्ताफलैरतिरयादुदफालि लोलैः ॥ ३३ ॥

खड्गाग्रभिन्नरिपुकुञ्जरराजिकुम्भ-
त्तोभादलत्तितसमुल्लसितासितश्रीः ।
मुक्ताफलप्रकरवृष्टिरधःपतन्ती
येनारिकीर्तिरतिसादरमालुलोके ॥ ३४ ॥

संघट्टजर्जरभुजाभरणारुणाश्म-
भ्रश्यत्परागपरिपांसुलमांसलांसाः ।

---

d,M3 अस्त्र N अभ्र; अस्त्र is suggested.
30b,M कूटैः for जूटैः
31d,N शाखाशिफानिचितनीभ्रमयीमवस्थाम्
M शाखाशिफां निबिडतीव्रमयीमधस्तात्
32a,N चकुलमाकुलभावितेन M has ०ताचितेन, ०ताङ्कितेन;
d,M आमिमिन्दन् for आममन्त्रन्
33b,N स ब्रह्मचारिभिरनु M3 प्रभ्रष्टवारिभि

पृथ्वीभृतः सततसन्निधिशालिशौर्य-
तेजोऽङ्कुराङ्कितभुजा इव यं प्रणेमुः ॥ ३५ ॥

जीर्णत्रुटत्पटलरन्ध्रनिविष्टवृष्टि-
क्लेदार्दितच्युतिपरप्रबलत्वचोऽन्तः ।
प्रत्यर्थिवासगृहभित्तिभुवो यदीय-
भीत्येव चित्ररचितान् मुमुचुः पतीन् स्वान् ॥ ३६ ॥

दर्पान्धगन्धगजकुम्भकवाटकूट-
संक्रान्तिनिघ्नघनशोणितशोणशोचिः ।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ॥ ३७ ॥

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥ ३८ ॥

अत्यायतैर्नियमकारिभिरुद्धतानां
निघ्नैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो
लक्ष्मीविलासभवनैर्भुवनं बभार ॥ ३९ ॥

तेजस्विताविरहिणो लघिमानमेत्य
जाड्यं श्रिताः प्रशमितायतयोऽधिदोषाः ।

---

35b,N पुष्यत् for भ्रस्यत् in M शुष्यत् in M3.
M पांशुल for पांसुल
36b,M3 द्युतिपरप्रबलात्मनोऽन्तः for च्युति० as above.
d,M3 निर्जरनिमान् for M भित्तिरचितान्
37a,N दर्पानुगन्ध
b,M3 रोचिः for शोचिः
38b,M3 धृत for कृत
39b,M निघ्नैः, M3 चित्र्यैः, Kāvyaprakāśa has दिव्यैः
b,M प्रभाभिः M3 प्रजाभिः

ग्रीष्मावसानदिवसा इव यस्य लोके
संकोचमीयुररयः परिहीणमानाः ॥ ४० ॥
काष्ठान्तरज्वलिततीव्रतरप्रताप-
सिद्धं प्रकल्पितकरेण महीपतीनाम् ।
दुग्धं यशोऽधिकृतनिर्वृति विश्वयात्रा-
पात्रेण येन महता रभसेन पीतम् ॥ ४१ ॥
यस्य प्रयाणसमये करिकर्णजाल-
कीर्णैस्तुरङ्गखुरकुट्टनदीर्णदेहैः ।
श्रान्तैर्दिगम्बरविलङ्घनतो निपत्य
रेवापयांसि पपिरे पृतनारजोभिः ॥ ४२ ॥
प्राज्यप्रतापजजयार्जितराजकोऽपि
निष्कण्टकानि भुवनान्यपि यः प्रशासत् ।
वार्तां चरैश्चिरमवाहयत प्रजाना-
माचारतुच्छचरिता विभवेऽपि नार्याः ॥ ४३ ॥
इति निरतिशयश्रीशीलशौर्यश्रुतोऽसौ
दिशि दिशि नृपचेष्टाश्चिन्तयन् मण्डलोत्थाः ।
ज्वलितविजयराज्यप्राज्यतेजाः प्रजानां
शिवममृतमनल्पं प्राप कीर्तिप्रवाहम् ॥ ४४ ॥

इति श्रीकाश्मीरभट्टशिवस्वामिनः कृतौ कप्फिणा-
भ्युदये महाकाव्ये शिवाङ्के नगरनरेन्द्र-
वर्णनो नाम प्रथमः सर्गः ।

---

41b,N सिद्धां प्रकल्पितकरेण महीमहीनाम्; M3 the same as in N.
c,N भुक्त्वा यशोऽर्थकृतनिर्वृत० M3 तुङ्गं यशोऽधिकृतनिर्वृत०

44a,M ०श्रितो for ०श्रुतो
b,M ०लोत्काः for ०लोत्थाः
The colophon in N has स्तोत्राह्विकाङ्कस्य and शिवाङ्के besides the text in M.

# द्वितीयः सर्गः ।

अथोत्तराशानृपमण्डलक्रियाविचारहेतोः प्रहितो हितक्रियम् ।
कदाचिदेनं समये सभासदं प्रतीपमाप प्रणिधिः प्रजापतिम् ॥ १ ॥
प्रजाः श्रियोऽर्थान् प्रकृतीरशेषतो रिपोरनिश्चित्य न स न्यवर्तत ।
प्रभुष्वियं सानृणतानुजीविनां भवन्ति यद्वस्तुषु तत्त्ववेदिनः ॥ २ ॥
न यस्य लोकान्तरदीपनैश्चरैः प्रपूर्यते क्षालितलक्ष्म मण्डलम् ।
महाकरैस्त्यक्ततनुः स तेजसा क्व नाम काले मतिमान् भवेदिनः ॥ ३ ॥
परेण पुंसा परमं समास्थिता नृपप्रसादप्रभवप्रभा सभा ।
अगाहि तेनावितथार्थवेदिना समाधिनेवानुमता मतिर्मुनेः ॥ ४ ॥
करालकेयूरविटङ्कमण्डलीनिविष्टरत्नद्युतिपुञ्जपिञ्जरैः ।
ज्वलत्प्रतापज्वलनैरिव द्युतिं बभार या भूमिभुजां भुजद्रुमैः ॥ ५ ॥
विना युगान्तं युगपत् स्थितिं यदि व्रजेत्सुमेरोः शिखरेषु भास्वताम् ।
ततिस्तदाष्टापदविष्टरस्थिता तुलामियाद्यत्र नरेन्द्रमण्डली ॥ ६ ॥
उरःकवाटैर्विकटैर्महीभुजां परस्पराश्लेषविशेषशालिभिः ।
पिधानयोगादिव मुष्णती दृशो मुमोच यस्या न गभीरता रतिम् ॥ ७ ॥

---

1c,N समरे for समये
3b,M3 पाटव for क्षालित; c,N and M3 स्वतेजसा for स तेजसा
4b,N भृतप्रसाद M नृतप्रसाद for नृपप्रसाद
5b,M3 विनष्ट for निविष्ट
6c,N तया for तदा
7c,N विधान for पिधान and दृशौ for दृशो
d,N यस्यां for यस्या
N गतिम् for रतिम्

महीभृतां भित्तिषु चित्रवर्तिनां पुरः स्थितानां च भयेन निश्चलम् ।
नृपासनाध्यासिनि यत्र कम्पिणेऽमरे विशेषो न निमेषतोऽभवत् ॥ ८ ॥
अनल्पसत्त्वाः कटकैः परिष्कृताः प्रकृष्टपक्षोच्छ्रितयः समुन्नताः ।
उदन्वतः कुक्षिमिव प्रविश्य यां न भूभृतः प्रापुरतिप्रकाशताम् ॥ ९ ॥
सभाङ्गणे तत्र स लोकसङ्कुला विलङ्घ्य कक्षाः क्षितिपालमैक्षत ।
तपोधनः सत्त्वरजस्तमोभुवः परं व्यतीत्येव पुमांसमव्ययम् ॥ १० ॥
दधानमग्रस्थितवारसुन्दरीप्रकीर्णकोत्कीर्णसमीरणेरिताम् ।
क्षितौ नतां वक्षसि हारवल्लरीं विलासदोलामिव तेजसां श्रियः ॥ ११ ॥
विलासतो मन्थरमन्थरं मुहुर्विवर्तयन्तं मणिकन्दुकं करे ।
रणेषु निर्जित्य जुहूषया हृतं द्विषद्यशःपिण्डमिव स्वतेजसि ॥ १२ ॥
मयूखभङ्गैः कनकाङ्गदोद्गतैः शिखासहस्रैरिव शौर्यतेजसः ।
भुजद्रुमे प्रारभमाणमुज्ज्वले जयाय नीराजनमाजिवस्मरे ॥ १३ ॥
किरीटकूटेन विटङ्कराजिकाविराजिजाम्बूनदजाततेजसा ।
विडम्बयन्तं नयनानलांशुभिः कपोलपालिं कपिलां कपालिनः ॥ १४ ॥
चलाचलश्यामलपक्ष्मलक्ष्मणा तरङ्गितापाङ्गविवृत्तवृत्तिना ।
अभीक्ष्णमक्ष्णा ददतं क्षितिक्षितां प्रसादनीलोत्पलमालिकामिव ॥ १५ ॥
अभङ्गुरग्राममुपाश्रितश्रुति स्वरेण संमूर्च्छितमूर्च्छनोच्छ्रिति ।
कलाप्रवीणैरुपवीणयद्भिरभ्युपास्यमानं कुशलं कुशीलवैः ॥ १६ ॥
प्रकोष्ठकोष्ठे कटकेन सङ्गिना विचित्रविच्छित्तिजुषा विराजितम् ।
भुजद्रुमालानितशौर्यकुञ्जरप्रकाशकार्तस्वरशृङ्खलश्रिया ॥ १७ ॥

---

8c,M. omits नि in ध्यासिनि
d,N परो for ऽमरे
9b,N प्रकृत्त for प्रकृष्ट
10d,M प्रतीत्येव for व्यतीत्येव
11c,N कथं क्षितौ वक्षसि तेजसां श्रियो
d,N विलासदोलामिव हारवल्लरीम्
12c,N has lost the folios after this upto VIII canto, 54th stanza.
c,M3 जुहूपुरा for जुहूषया
15a,M omits क्षण; M लोलेक्षणश्यामल
16b,M3 स्वरेषु for स्वरेण
c,M3 रित्यु० for रभ्यु०
17b,M3 विभिन्न for विचित्र and M3 सभाजितः for विराजितम्
c,M3 न्वित for ०नित in लानित

उदस्तमेकं चरणाब्जमासने दधानमुत्तानतलोच्छ्वसच्छवि ।
नखांशुचित्रीकृतसभ्यभूमिना भुजेन संभावितजानुमण्डलम् ॥ १८ ॥
( इति नवभिः कुलकम् )

अरुद्धमार्गः प्रतिहारवेदिना पुरः परागत्य स मेदिनीपतेः ।
विधाय लोलाञ्जलिदन्तुरं शिरः कृतप्रणामो निषसाद भूतले ॥ १९ ॥
प्रकाशितप्रेम नृपः प्रसेदिवान् सिषेच तस्मिन् स विलोचनामृतम् ।
भवन्ति ते भाजनमर्थसंपदां विदन्ति ये भृत्यजनानुरञ्जनम् ॥ २० ॥
स तत्र विश्वस्ततया सभासदां विविक्तवाच्यामपि चारभारतीम् ।
समक्षमाकर्णयितुं प्रचक्रमे रहो हि तद्यत्र न सन्त्यसंस्तुताः ॥ २१ ॥
विभाव्य दीप्रप्रतिभाप्रभः सभां स भूभुजोत्सृष्टचलाक्षिचोदितः ।
द्विषत्क्रियाचारविचारचारुधीरुदाहरत्सूचितसंगरा गिरः ॥ २२ ॥
धियैव निर्णीतनिगूढकर्मणां भवादृशां पार्थिव वेद्यमस्ति किम् ।
असौ ममापत्रपता तथापि यन्नयामि वाचः पुनरुक्तवाच्यताम् ॥ २३ ॥
निवृत्तशाठ्योत्तरमस्खलन्मनो वचो हि वाच्यं हितमायतौ चरैः ।
स्वतः प्रमाणं परतस्तु भूपतेः स्वतन्त्रवृत्ता विधयो विधेरिव ॥ २४ ॥
तथापि कालोचितमस्य कर्मणः करोमि पृथ्वीश पुरः प्रबोधनम् ।
विचित्रचिन्ताचलचेतसं पदे हितैषिणो हि स्मरयेयुरीश्वरम् ॥ २५ ॥
समाश्रितं शाश्वतयानपात्रतां श्रियामनारुह्य निकेतनं वरम् ।
विगाहते यः क्षुभितं परार्णवं स तद्बलौघेन निरस्य हीयते ॥ २६ ॥
चलेष्ववश्येषु विरुद्धवृत्तिषु प्रयोज्य वीर्येण गुणेषु षट्स्वपि ।
नृपश्चिरं चित्तमिवेन्द्रियेष्वथो निरूपणीयं मुनिवन्निरूपयेत् ॥ २७ ॥

---

18c,M3 सारीकृत्य for चित्रीकृत्य
21b,M वाक्या or वाच्या written one above the other.
23c,M3 यतोऽपि for तथापि
24a,M शाठ्योत्तर overlaps शाठ्येतर, the former not being inked.
c,M3 स्वतः for अतः
25c,M3 विभिन्न for विचित्र
26c,M3 दीयते for हीयते
27a,M3 वलेषु for चलेषु

नयानुगा धीरधियो धुरन्धरा विचारिणश्चारचरिष्णुचक्षुषः ।
अयं किमल्पोपचयो भवद्विधा वदन्ति नोत्थानमवद्यमद्य यत् ॥ २८ ॥
इदं हि तावत् प्रथमं पृथुद्युते विचार्यतामार्य निजेन चेतसा ।
किमु क्वचित् कृष्टधनुर्धरोष्मणः तव प्रतापस्य भवेदगोचरः ॥ २९ ॥
महाप्रभावप्रभवस्य तस्य ते ज्वलत्यविच्छित्ति पराक्रमानले ।
विदग्ध निर्दग्धुमिहात्मनः कुलं विपक्षपक्षे समभावि भूभृता ॥ ३० ॥
समृद्धिभूरस्ति निरस्तदुर्गतिः प्रजेश देशो दिशि यत्तरदक्षिणः ।
जगाम सत्कौशल कोशला इति प्रजासु यः प्राज्यजनः प्रकाशताम् ॥ ३१ ॥
श्रियः पदं तत्र दुरासदं परैरमाय निर्माय पुरूपमः पुरम् ।
विजृम्भते बिभ्रदकम्प्रसेनतां प्रसेनजिज्ज्ञातमहा महीपतिः ॥ ३२ ॥
अनश्वरेणेश्वरभूतिभागिना क्षमाभृता संभृतवाहिनीश्रिया ।
प्रभाप्रभाभ्यां भजते दिगुत्तरा प्रसाधिता तेन हिमाचलेन च ॥ ३३ ॥
स्वके सुकर्मोथ परे परन्तपो निरन्तरायं स न वेद नान्तरम् ।
विपत्तयो ह्युत्तरपण्डितं नरं त्यजन्ति सिंहं हरिणाङ्गना इव ॥ ३४ ॥
मनोरथं धर्म्यमिवानघाः श्रियः सहस्रनेत्रं दिवि देवता इव ।
उपासते तं सुभगप्रजं प्रजाः क्षपापतिं व्योमनि तारका इव ॥ ३५ ॥
श्रितेन शुद्धिं परिपूरिता सभा नृपेण सा तद्यशसेव दिक्तटी ।
चकास्ति लावण्यमयामृतस्नुता शरत्त्रियामेव तुषाररोचिषा ॥ ३६ ॥
गुणायतैरायतिवेदिभिः समं समैरमात्यैरवमत्य दुर्मतीन् ।
नयत्यसौ मण्डलचिन्तया दिनं प्रवृत्तषाड्गुण्यकथोऽकथंकथः ॥ ३७ ॥
विमर्शसिद्धाञ्जनरञ्जनोज्ज्वलं निवेश्य मार्गेषु विचारलोचनम् ।
पदे पदे कण्टकसङ्कुला भुवो निमार्ष्टचसौ नीतिमयेन हेतिना ॥ ३८ ॥

---

28a, M3 दुर्द्धरा for धुरन्धरा
29b, M3 निवार्यताम् for विचार्यताम्
30c, M3 विदग्धधी for विदग्ध निर्दग्धु
32b, M3 रमात्य for रमाय
33a, M3 अनश्वरेणश्वर for अनश्वरेणेश्वर
34b, M नोन्तरम् M3 नान्तरम् for नोत्तरम्
35a, M अनघश्रियः M3 अनघाः श्रियः

तनोत्यतान्तः प्रकृतिष्वसौ तथा समासु सीमानमुपायसंपदाम् ।
प्रकर्षमस्योशनसोऽपि शासनान्नयो यथा याति ययातितेजसः ॥ ३९ ॥
जयोद्यमेच्छासमलङ्कृतं मनो जगज्जिगीषां व्यवसायभूषणाम् ।
क्रियोर्जितत्वं विभवप्रसाधनं वहत्यनुत्सेकविराजितां श्रियम् ॥ ४० ॥
उदारताऽनुद्धतिरुन्नता धृतिः शमः क्षमा दक्षिणता दया दमः ।
इमामसौ बिभ्रदमात्यसंपदं क्षिणोति शारीरविपक्षसंहतिम् ॥ ४१ ॥
अनेकमेको जगदन्तरं तरन् स चिन्तितद्वादशमण्डलोदयः ।
वहन् समूहं महसां महीयसां परं पदं क्रामति भानुमानिव ॥ ४२ ॥
प्रियं दिशन्नाभियुनक्ति भूरिशः करैः समाश्लिष्यति नातिकर्कशैः ।
इति प्रजां लालयते स पेशलं वधूं नवोढामिव लम्भयन् धृतिम् ॥ ४३ ॥
अभिन्नमर्यादमुदूढभूभरैश्चतुर्भिरक्षोभ्यगभीरवृत्तिभिः ।
परिष्कृता राजति तस्य राजता स्थिरैरुपायैः क्षितिरर्णवैरिव ॥ ४४ ॥
सदस्सु दूतत्रयकार्यमार्यधीः प्रवर्त्य निर्वर्तितवासरक्रियः ।
शृणोति दोषैरधिदोषमुज्झिता गिरः स गूढाः परचक्रचारिणाम् ॥ ४५ ॥
अनल्पसत्कारसहस्रसंयतैः सुदुर्लभप्रत्युपकारदुःखिभिः ।
रणोत्सुकैर्बन्धुजनैरसह्यते तदस्य सौभाग्यमभूतशात्रवम् ॥ ४६ ॥
प्रमाद्यदुद्दाममहेभमण्डलीतरङ्गितोत्तुङ्गतुरङ्गसङ्गिभिः ।
युगान्तमेघौघघटाविशङ्कटां करोत्यसौ दिक्षु बलैस्तिरस्क्रियाम् ॥ ४७ ॥
इदं पुरे चित्रतरं च तत्र यन्नृपस्य नीचैश्चरितं चिचीषताम् ।
पथि प्रकाशेऽपि कुतोऽपि दृश्यते दृशां तमः सान्द्रममन्द्रतन्द्रिणः*॥ ४८ ॥
अधिष्ठितं नूनमनूनधामभिः पुरं सुरैः कल्पिततन्महर्द्धिभिः ।
अभीरुता तस्य कुतोऽन्यथा तथा जयोर्जिते जाग्रति भूभुजि त्वयि ॥ ४९ ॥

---

39a,M omits ति in प्रकृतिष्वसौ
40d,M seems to read अनुच्चेक for अनुत्सेक
42a,M अनेकमेवं it may be ०मेको
43a,M3 प्रियं for श्रियं
46d,M reads मभूद for मभूत०
49b,M has पुरः for पुरं in M3

नरेन्द्रचन्द्रस्य यथा यथोदयाद्विजृम्भते तस्य स सैन्यसागरः ।
तथा तथा नूनमिमामपि क्षितिं पुरा हरत्येव च कार्मुकोर्मिभिः ॥ ५० ॥

तदित्थमुत्तिष्ठति तत्र दारुणे दिने दिने रोग इवोल्बणे रिपौ ।
प्रकोपनाय प्रशमाय वृष्यतां वृषद्युते दुर्विषहं विषं महत् ॥ ५१ ॥

आयान्तु द्विरदरथाश्वपुञ्जभाजां पौराणां निनदपरम्पराः पुरस्ते ।
तस्यारेर्धृतधृतिधामदुःश्रवास्ताः श्रावस्त्यां श्रवणगुहाङ्गनातिथित्वम् ॥ ५२ ॥

इति नृपतिसमाजक्षोभपैशुन्यकारि
प्रणिधिरधिमहार्थं वाक्यमुच्चैरुदीर्य ।
श्रमशमशिवभूभृद्वीक्षणाम्भोऽभिषिक्तः
सपदि स विरराम प्राप्तसत्कारसारः ॥ ५३ ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये चरविक्षेप-
विन्यासो नाम द्वितीयः सर्गः ।

---

51c,M वृष्यतां M3 दृष्यतो d,M3 प्रयुज्यते for M वृषद्युते

# तृतीयः सर्गः ।

संप्राप्य प्रणिधिगिरां गरीयसीनामत्यन्तं तरलिततास्रतारकाणाम् ।
संरम्भो भ्रुकुटिचलद्भ्रु बभ्रुभासां क्रोधेन प्रसभमलम्भि भूपतीनाम् ॥ १ ॥
सारम्भं करतलताडनैः कठोरैः केयूरं मणिमयमच्छिदत्क्रुधान्धः ।
दोःस्तम्भप्रणयिपराक्रमद्विपस्य प्रारम्भे युध इव शृङ्खलं सुबाहुः ॥ २ ॥
भूपालः करपुटपेषतः प्रवृत्तं क्रोधान्धो दधदधिधाम धूमदण्डम् ।
संहर्तुं भुवनमदर्शि दर्शकाख्यो युद्धात्मा यम इव दण्डवानुपेतः ॥ ३ ॥
अङ्गेऽङ्गे प्रतिफलितैर्महीपतीनामाकारैः प्रतिघनघर्मबिन्दु बिन्दुः ।
अभ्यूहे कुरुकुलकोपितासुरद्विट्संरम्भप्रकटितविश्वरूपलीलाम् ॥ ४ ॥
चिक्षेप प्रमृदितमर्मरोर्मिकोत्थं रत्नाश्मप्रकरमनेकमेकलक्ष्यः ।
पाणिभ्यां भुवि कुसुमाञ्जलिक्रमेण प्रत्यर्थिचयनवनाट्यसूत्रधारः ॥ ५ ॥
आक्षेपच्छिदुरकरालहार उच्चैर्मुक्तौघप्रकरमवाकिरत्सुबन्धोः ।
उन्माद्यद्गुरुभुजशौर्यवारणोद्यत्फूत्कारच्युतसितशीकरोत्करश्रीः ॥ ६ ॥
आस्फोटस्फुटमणिभङ्गमङ्गदानामुत्तुङ्गद्युतिनिकरच्छलेनजिष्णुः ।
दोर्दण्डप्रसरदसृक्शिरासहस्रैरातेने बलिमिव कोपकालरात्र्यै ॥ ७ ॥

---

2c, M omits : after दो in दोःस्तम्भ

3a, M3 प्रवृद्धि for प्रवृत्तं

c, M3 दर्शकाख्यं for दर्शकाख्यः

4a, M3 अङ्ग for अङ्गे in अङ्गेऽङ्गे; b, M3 ०वद्भिः for बिन्दुः in M2.

6c, M has वारणोद्य for वारणोत्थ, M3 वारणोक्षत

d, M3 फुत्कार for फूत्कार

7b, M उन्मत्त for उत्तुङ्ग in M3.

M3 स्तलेन for छलेन

जृम्भाभिः स्फुटमुखगह्वरस्य जिह्वा ताम्बूलव्यतिकरपिङ्गला बलस्य ।
निर्दग्धुं परबलपुञ्जमुज्जिहाना ज्वालेव व्यचलदमर्षपावकस्य ॥ ८ ॥
आताम्रा सपदि सुशर्मणो मुखश्रीरालक्षि क्षुभितकषायितायताक्षी ।
प्रत्यग्रप्रचलदसृक्प्रकोपकार्यकालीव प्रविकचपिङ्गपङ्कजाक्षी ॥ ९ ॥
दन्ताग्रक्रकचकठोरघट्टनोत्थं सामर्षं ध्वनितमधत्त भूरिधामा ।
क्रोधाग्निस्फुटतरतीव्रतापतप्तस्थूलास्थित्रुटितचटत्कृतानुकारम् ॥ १० ॥
पाण्ड्यस्य प्यधित पिशङ्गितोऽङ्गदानां क्षोदः क्ष्मां कठिनकराग्रकुट्टितानाम् ।
आस्फोटैर्विकटतटांसकुम्भकूटात् सैन्दूरं रज इव विक्रमद्विपस्य ॥ ११ ॥
उज्जृम्भाविकटमुखावटोत्थमौज्झीदुष्णोष्णश्वसितसमीरणं सुराष्ट्रः ।
सौन्दर्यं ललितगुणाणिमाभिमम्लौ तेनैव प्रतिबलकीर्तिकाननानाम् ॥ १२ ॥
ताल्वग्रप्रतिफलितप्रतिप्रणादं क्रुद्धात्मा यदकृत हुंकृतं सुकेतुः ।
लोकानां तदिह झषध्वजं दिधक्षौ त्र्यक्षे वपुषि लुलोकिषां लुलाव ॥ १३ ॥
क्ष्मापालः क्षणधुतधूसरोष्ठमुज्झन् निश्वासश्वसनमुदुष्म भीष्मकाख्यः ।
कोपाग्निप्रणयिनि चित्त एव दग्धुं संकल्पैः समुपनिनाय वैरिवर्गम् ॥ १४ ॥
भीष्मोष्मा गलितभुजद्रुमप्रसर्पद्धूमौघः प्रहतपृथूरुघोरघोषः ।
बभ्राजेऽरुणतरतारकास्फुलिङ्गः स्फीतत्वं पवनवने प्रकोपदावः ॥ १५ ॥
सारम्भं भुजतरुपञ्जरान्तराले किर्मीरः करपरिमर्शमादधानः ।
उत्ताम्यत्त्वरितमरातिदारणार्थं भूयिष्ठं मन इव मत्सरादरौत्सीत् ॥ १६ ॥
केयूरारुणदृषदां करप्रहारैः पिष्टानां पिहितवपुः परस्परागैः ।
उत्पातप्रसरपिधानधूसरस्य प्रारेभे प्रलयरवेर्विडम्बमान्ध्रः ॥ १७ ॥

---

9c,M कालीपत्नी or कालपत्नी for M3 प्रकोपकार्य
10a,M3 त्कं for त्थं in घट्टनोत्थं
c,M omits ग्नि in क्रोधाग्नि
11a,M3 क्षुभित for प्यधित
M reads पिशङ्गभो for पिशङ्गितो
12a,M3 उत्क्रमौष्ठात् for उत्थमौज्झीत
c,M मालि for माभि
13a,M3 अर्थ्यग्र for ताल्वग्र in M.
14a,M3 भूपालः for क्ष्मापालः
15a,M3 भीष्मोऽयं for भीष्मोष्मा
16c,M3 उत्त्रास्य for उत्ताम्यत्
17b,M3 परम्परागैः for परस्परागैः
c,M उत्खात for उत्पात

जृम्भासु प्रसभमिवोत्कलस्य जिह्वा जज्वालोज्ज्वलमुखगह्वरान्तरा या ।
सा क्रुद्धोर्जितजनमेजयाध्वराध्वक्रोधाग्निभ्रमितभुजङ्गविभ्रमाभूत् ॥ १८॥
अन्तःस्थस्फुरदुरुमन्युवह्निसृष्टस्पष्टोष्मक्कथनविशोषशङ्कयेव ।
भीमस्य द्रुततरविद्रुतं निरीय स्वेदाम्भो बहु बहिरानशे शरीरम् ॥ १९ ॥
भ्रूभङ्गभ्रुकुटिविशङ्कटोर्मिरुच्चैरावर्त्तप्रकटमुखावटोग्रघोषः ।
चुक्षोभ प्रसरदमर्षवर्षुकाभ्रो निर्गूढं सपदि समुद्रवत्समुद्रः ॥ २० ॥
अङ्गेऽङ्गे करदलिताङ्गदारुणाश्मक्षोदौघं प्रचुरपरस्परं प्रतीच्छन् ।
आश्लिक्षद् दृढधनुरापिपृच्छिषेच्छुं* क्रोधाग्निं दृढमिव वैरिवारणाय ॥ २१ ॥
क्रोधाग्नेः सदसि यदैव हेतिजालैर्जज्वाल ज्वलितदिगम्बरोऽम्बरीषः ।
नूनं तेऽनवधिविरोधकाः किलाजौ लाजौघा इव परिचक्रथुस्तदैव ॥ २२ ॥
मेदिन्याः करहतिजन्मनोज्झहार प्राग्ज्योतिर्गुरुतरगह्वरेण कङ्कः ।
पातालाच्छिततरशेषभोगभागां क्रोधाग्निक्लमशमिनीं सुधामिवोच्चैः ॥ २३ ॥
पुस्फोर स्फुरितरुचिप्रकोष्ठमोष्ठः स्वेदाम्भःस्नपिततनोः सितध्वजस्य ।
अत्युग्रां जपत इव प्रकोपकृत्यां निर्मातुं द्विषदभिचारमन्त्रतन्त्रम् ॥ २४ ॥
सस्यन्दं परिणमता निपत्य हारक्षोदेन क्षणकृतपाणिपेशलेन ।
स्वेदाम्भो वपुषि पुपोष कोपवह्निक्वाथोरुस्फुटपृथुफेनकान्तिमिन्दोः॥ २५ ॥
दोर्दण्डे करमलनेन धूमलेखां सोल्लासामसिलतिकामिवाश्रितस्य ।
शिश्लेष स्रजि परिमण्डलाग्रशोभां भृङ्गौघः पर इव विस्फुरन्नलस्य ॥ २६ ॥
दोर्दण्डे शतधनुरंसकुट्टनोत्थैः संघट्टैर्विघटितहाटकाङ्गदोऽपि ।
क्रोधोल्काकुलकपिलैर्विवृत्य पश्यन् केयूरं व्यरचयदेव दृष्टिपातैः ॥ २७ ॥

---

18a,M3 अविह्वल for ०वोत्कल
c,M ध्वराय for ध्वराध्व
d,M3 प्रेद्धाग्नि for क्रोधाग्नि
19a,M3 रुष्ट for सृष्ट
b,M3 स्पष्टोष्ठथं for स्पष्टोष्म
21c,M3 आपिपृच्छि सेक्तुं for आपिपृच्छिषेच्छुं
d,M3 द्रुममिव वैरिदारणाय for दृढ०
d,M3 कोपाग्नि for क्रोधाग्नि
23d,M3 कोपोष्मद्रुम for क्रोधाग्निक्लम
24d,M3 निर्यान्तं for निर्मातुम्
26a,M3 मथनेन for मलनेन

तत्रत्यैश्चकिततरं निरीक्ष्यमाणा संभाव्यत्रिभुवनघस्मरोग्रशक्तिः ।
कृत्येव भ्रुकुटिरतिस्फुटा ललाटे शाल्वस्य प्रसरदमर्षमुल्ललास ॥ २८ ॥
यज्जृम्भाप्रथिम पृथुध्वजेन वक्त्रं व्यादायि त्रुटदचलेन्द्ररन्ध्रगौरम् ।
न प्रापत्कथमपि तत्क्षणेन तत्र त्रासार्ता करकलितापदं त्रिलोकी ॥ २९ ॥
जृम्भस्य ज्वलदविकल्पकल्पितोल्काकल्पान्तं प्रविततमास्यमन्वहार्षीत् ।
तप्तांशोः प्रलयनवावतारवेलापैशुन्यप्रसृतविलाविलश्रि बिम्बम् ॥ ३० ॥
आकाङ्क्षन् समरसुरः करावमर्शे प्रद्योतः सुमुखनखोन्मुखैर्मयूखैः ।
ऊष्माणं कषितुमिव प्रकोपवह्नेः स्वच्छैः स्म च्छुरयति चन्दनच्छटौघैः ॥३१॥
स्वेदाम्बुप्रशमविजृम्भि वीजनार्थं यद्बभ्रुः प्रसभमबिभ्रमद्दुकूलम् ।
क्रोधाग्नेरधिवपुरुच्चकैरतृप्यन् संधुक्षीकरणमिवाततान तेन ॥ ३२ ॥
उत्खाताहितकटकां निवेदयिष्ये क्ष्मामेवात्युचितमुपायनं स्वभर्त्रे ।
व्याकार्षीदत इव मण्डनं गदोऽस्या विच्छिन्नाङ्गदमणिहारमौक्तिकौघैः॥३३॥
हन्तुं द्विड्द्विपकुलमास्यकन्दरायां सावज्ञं स्मितकिरणच्छटासटौघैः ।
हुंकारध्वनितगुरुर्व्यलोकि मूर्तिः प्रोथस्य प्रतिघहरिर्व्रजन् विजृम्भाम् ॥ ३४ ॥
तन्वाने ततकरपट्टपीड्यमाने* क्रोधोग्रस्वनितमुदग्रमुग्रसेने ।
तत्कालं निबिडमकाण्डभङ्गभीताश्चक्रन्दुः प्रतिनिनदच्छलेन काष्ठाः॥ ३५ ॥
क्रोधोल्कैः सदसि यदस्य दृष्टिपातैर्माभूद् भूः प्रसभमकाण्डचण्डदाहा ।
इत्यस्मादिव ववृधेतराममर्षात् स्वेदाम्भःकणनिकरः करन्धमेन ॥ ३६ ॥
संत्रस्यत्क्षितिधरदन्ति दन्तवक्रश्चक्रे यद् भुवि करपट्टकुट्टनानि ।
ससाराऽसुररिपुकेलिकोलघूर्णद्घोणाग्रप्रहतिमतिस्फुटां फणीन्द्रः ॥ ३७ ॥

---

29a, M shows lacuna for प्रथिम
d, M3 ललना for कलिता
30b, M अन्वहासीत् for अन्वहार्षीत्
32a, M3 स्वेदाम्भः for स्वेदाम्बु
33b, M3 सुभद्रे for स्वभर्त्रे
c, M3 गजो for गदो
34b, M सावज्ञ for सावज्ञं
d, M3 प्रतिप for प्रतिघ
35a, M3 पिड्यमाने for पीड्यमाने
37a, M3 चक्र for वक्र
d, M3 मतः स्फुरत् for अतिस्फुटां

सन्तापैर्गुरुदशनाधरच्छिदाभिः पाण्यग्रप्रकटललाटपट्टकाषैः ।
मार्ष्टि स्म क्षितिपचमूप्रसाधनाय क्रोधाग्नौ निजभुजवीर्यवर्म रुक्मी ॥ ३८ ॥
व्यावृत्य स्थिरभुजपीडितोरु यद्यद् दिक्चक्रं क्षुभितमुदीक्षते स्म तत्तत् ।
दृष्टीनामनलकणैरकल्प्यमूलैः सौवल्कः सकलमजिज्वलज्ज्वलद्भिः ॥ ३९ ॥
चिक्षेप स्रजमभिकृष्य गाढमन्युः कौरव्यः कुवलयकल्पितामुरस्तः ।
संकल्पाकलितपुरःस्थितारिसेनासंहारप्रकटितकालपाशशङ्काम् ॥ ४० ॥
दुःषेणः कठिनचपेटपिष्टलुण्ठत्केयूरोच्छलितरजश्छटाच्छलेन ।
यत्पुष्यत् त्रिभुवनमण्डलोष्ममण्डं दोर्दण्डात्तदनवमं ववाम धाम ॥ ४१ ॥
क्ष्मापालाः किं मृणालम्रदिमसु मथनं निर्धुनाना धरित्रीं
क्रोधेनेद्धाः कुरुध्वे फणिषु परमितीवार्थनार्थेन तेषाम् ।
प्राप्ताः पातालमूलाच्छिदुरमणिगुणच्छद्मना पादमूले
पेतुः पादप्रहारप्रभवभरभवद्भोगभङ्गा भुजङ्गाः ॥ ४२ ॥
इत्थं संरम्भजृम्भाविभवसरभसभ्रान्तभूयिष्ठभूभृद्-
भूरिप्रागल्भ्यभूमाऽऽभरणभुजभरैर्भङ्गुरस्तम्भगर्वा ।
सोल्लासं लास्यवेल्लद्विकटशिवभुजादण्डषण्डोरुवात-
क्षुभ्यत्क्षोणीधरक्ष्मावलयविलसितं सा सभा संबभार ॥ ४३ ॥

इति श्रीकम्फिणाभ्युदये महाकाव्ये सभा-
संक्षोभो नाम तृतीयः सर्गः ॥

---

38b,M3 प्राण्यग्र for पाण्यग्र; M3 कम्पैः for काषैः 42b,M3 क्रोधोन्नद्धाः for क्रोधेनेद्धाः
d,M3 कक्षलक्ष्मी for वर्म रुक्मी

## चतुर्थः सर्गः ।

अथ सदसि समस्तायस्तभूपालचक्रे
प्रकटितगुरुकोपारम्भसंरम्भजृम्भे ।
वहति विलसितानि प्रस्तुतानि प्रचण्ड-
प्रलयजलदजालाडम्बरैरम्बरस्य ॥ १ ॥

अनधिगतनृपाज्ञाविघ्नितेच्छेषु दुःस्थ-
स्थितिषु परिमृशत्सु स्थूलमंसस्थलाग्रम् ।
प्रभुमुखकृतलक्ष्यैरीक्षणैरक्षमेषु
क्षितिपतिषु रणायान्वेक्षमाणेष्वनुज्ञाम् ॥ २ ॥

विदलितकरशाखं नर्तितभ्रूविलासा-
नुमितनृपतिकार्यान्तर्गतव्याकुलत्वे ।
विदधति विनिबद्धव्यूहमन्योन्यमारात्
किमपि सुनयचिन्तामन्त्रणं मन्त्रिवृन्दे ॥ ३ ॥

जनितभुजविजृम्भेष्वग्रदूतेषु काल्याः
प्रहरणरणकण्डूकल्पिताचार्यकेषु ।

---

2d, M3 वेक्ष्यमाण for न्वेक्षमाण and नूनं for ०नुज्ञाम्    3d M3 तन्त्रे for वृन्दे

अहमहमिकयाहंकारहुंकारगर्भं
हृदि रणरणकेषु क्ष्मामृतामुल्लसत्सु ॥ ४ ॥
विकटमुकुटरत्नाभ्युत्थितैरंशुजालै-
र्वियति विहितशम्पं कम्पयित्वोत्तमाङ्गम् ।
अदयदशनदंशक्रान्तिभाजोऽधरस्य
स्मितरुचिसुधयोच्चैः साधु संधाय सेकम् ॥ ५ ॥
वदनपवनगन्धाकृष्टदन्तांशुशुभ्र-
भ्रमरभरनिभेन भ्राजितव्यक्तवर्णाम् ।
प्रसभमभिससर्ज क्रोधवह्निप्रतापा-
दिव जितजडिमानं वाचमुच्चैः सुबाहुः ॥ ६ ॥
महति पतिसमाजे जल्पितैर्जातजाड्यैः
किमपि किल विवक्षुर्यत् त्रपां नावगाहे ।
तदिदमकृतकानां प्रेरिकाणां प्रसङ्ग-
प्रसभमभिगतानां सत्क्रियाणां महत्त्वम् ॥ ७ ॥
प्रकृतिपरिचितत्वं रन्ध्ररक्षात्तमत्वं
परुषमपि हितार्थाधायि विज्ञप्तिवाक्यम् ।
यशसि रुचिरसाध्व्या धीरलालाटिकत्वं
प्रभुषु भृशममीभिर्जायते भृत्यभावः ॥ ८ ॥
समररभससेनासिन्धुसंधुक्षणेन्दुं
प्रलयपवनमुग्रक्रोधचित्रार्चिषां वः ।
तदिह नृपतयो मे शौर्यमाणिक्यशाणं
सदसि वचनमेतत्सोपजोषं जुषध्वम् ॥ ९ ॥

---

4c, M3 गर्तं for गर्भं
6b, M3 वक्त्रम् for वर्णाम्
7b, M3 मानावगाहे for त्रपां नावगाहे
9b, M3 भिन्न for चित्र
d, M3 उपयोगं for उपजोषं

15308

क भुवनचरमस्योद्दाम देवस्य तेजः
किसलयितमसंख्यैः संख्यवीर्याङ्कुरैर्वः ।
क च शिखिन इवाग्रे भङ्गि पातङ्गमङ्गं
प्रतिबलबलमस्मत्तेजसाश्रित्यतेऽतः ॥ १० ॥

पृथुफलपरिभोगैः प्रापितेषु प्रसादै-
र्गुरुबलभुजसारेष्वेवमस्मासु सत्सु ।
कथमनुदितपूर्वः शत्रुशङ्काकलङ्को
विशति यशसि शुभ्रे नायमल्पो निकारः ॥ ११ ॥

अनुपचितभुजोर्जो निर्जिगीषाजडो वा
विरलबलसहायो वा सहेतारिवृद्धिम् ।
प्रतिपदपरिसृष्टेष्वेषु तैक्ष्ण्यादभीक्ष्णं
बत वदत किमेकस्यापि संभावनास्ति ॥ १२ ॥

विदलितगजसेनामण्डलीगण्डपण्डः
सततसमरशौण्डो मण्डलाग्रप्रचण्डः ।
निबिडबलमकाण्डाखण्डलाखण्डनोऽपि
स्फुटयति भुजदण्डो नास्य कण्डूलिताङ्कः ॥ १३ ॥

प्रतिघकपिलकान्तिः कल्पितानेन चाजौ
भ्रुकुटिकुटिलभीमभ्रूललाटाटवीयम् ।
सयपरवशहृष्यद्दृष्टि दृष्टाश्च नष्ट-
द्रुतरिपुबलसेनासंकुला दिग्विभागाः ॥ १४ ॥

गिरितटविकटे च क्रूरवक्षःकवाटे
द्विरदरदनखण्डाः संगरे भग्नमग्नाः ।

---

10d, M3 उष्णव्यत्यये चिन्त्यतेऽन्तः for मस्मत्तेजसश्रित्यतेऽतः

11a, M3 पोषितेष्ट for प्रापितेषु

14b, M3 ज्वालललाटवीर्याः for भ्रूललाटाटवीयम्

सुखितनृपतिलक्ष्मीसंभृतस्मेरसान्द्र-
स्मितकिरणकरालां कान्तिमस्योद्वहन्ति ॥ १५ ॥
अपि विरचितसंस्थः क्षुद्रदोषान्धकार-
प्रसरदलनदीक्षादक्षिणो दक्षिणायाम् ।
शरदि रविरिवारादाददात्येष तीव्रः
प्रसृतकरसहस्रः सर्वदिग्भ्योऽपि सारम् ॥ १६ ॥
अविरतमविरक्ताः सन्ति चामी सहायाः
क्षयितवहुविपक्षाः क्षत्रियाः क्रूरशौर्याः ।
नियतमपि हि येषामेककालत्रिलोकी-
कवलविधिरनिच्छामात्रविघ्नादनिघ्नः ॥ १७ ॥
विपदसहसहायोत्साहशौर्यातिभार-
स्वभुजवलसमिद्धो नद्धसम्पत्तिरेवम् ।
त्वमिव भुवनभर्ता भूपते कोऽपरोऽस्ति
त्रिभुवनविजिगीषापूरणैकप्रवीरः ॥ १८ ॥
तदिह नरपते धीर्धीर कस्मादकस्माद्
विजयजलधिमन्था मन्थरत्वं गता ते ।
विमृश भवदमर्षेन्दूदयैकप्रतीक्षां-
श्चलभुजवनवीचिक्षोभिणः क्षत्रसिन्धून् ॥ १९ ॥
विधुररिपुपुरन्ध्रीतीव्रनिश्वासताप-
व्यतिकरित इवोच्चैर्भीष्ममुष्माणमाप्य ।
प्रकटितरिपुदाहो भाति यस्य प्रतापः
स्फुरति सदसि सोऽयं क्रूरकर्मा सुशर्मा ॥ २० ॥
दृढधनुरयमास्ते शौर्यशौण्डो यदीयः
पृथुलपुलकजालः कोपकम्पच्छलेन ।

---

15a, M तद् द्वार for च क्रूर
b, M3 संयुगे for संगरे

17c, M3 नियम for नियत

सुचिरसमरलाभोद्भूतसोत्कर्षहर्षः
प्रकटमिव विधत्ते ताण्डवं बाहुदण्डः ॥ २१ ॥

बलनलगदपाण्डुप्रोथकिर्मीरकङ्का-
कृतिपवनसुराष्ट्रान्ध्रेन्दवोऽपि क्रुधान्धाः ।
प्रलयसमयदृष्टा द्वादशार्का इवैते
प्रकटयितुमशेषप्लोषितेजः प्रवृत्ताः ॥ २२ ॥

नृप तदलमचिन्त्यैर्नीतिचिन्तान्तरायैः
सफलयतु भुजस्ते भूभृतां वाञ्छितानि ।
असहनसहवृद्धा साहसैकान्तकान्ता
व्रजति न हि नृपश्रीर्दीर्घतां दीर्घसूत्रे ॥ २३ ॥

प्रकृतिविकृतिभाजो भङ्गुराङ्गस्य भूयः
छलगतिषु सहिष्णोर्वैरिवर्गाकुलस्य ।
सततमिति शरीरस्येव राज्यस्य राजन्
फलमिह परलोकोद्धारशुद्धेः किमन्यत् ॥ २४ ॥

अति बलवति शत्रौ तुल्यशौर्योदये वा
दधति समुचितत्वं नीतिचिन्तान्तरायाः ।
वद सुनयविवादालक्ष्यतां तुच्छतूल-
प्लवलघिमसु राजन् कोशलाः कोशलेषु ॥ २५ ॥

इयमिह ननु नीतिर्भीरुलोकस्य माता
प्रभवति विजिगीषोर्वस्तुनः कस्य सिद्ध्यै ।
वहति नयविभूतेः शक्तिरग्रेसरत्वं
सममिदमुदपादि क्षात्रमुग्रं च तेजः ॥ २६ ॥

---

22b,M3 छविपवन perhaps for शिवियवन
24a,M3 भूप for भूयः
d,M3 किमेतत् for किमन्यत्
26cM,3 संगराग्रे for शक्तिरग्रे

रणसरसि वसन्ती सान्द्रनिस्त्रिंशधारा-
सलिलसततसिक्तेर्जातजाड्येव लक्ष्मीः ।
समभिलषति भूम्ना प्लुष्टदुष्टारिसेना-
वनविभवविवृद्धं क्रोधनानां प्रतापम् ॥ २७ ॥

धृतधनलवलीलादुर्विदग्धोद्धतानां
प्रभवति मृदुतायै तादृशां तेज एव ।
द्रढिममयमयो हि प्राज्यतेजोऽभिषङ्गाद्
विघटितकठिनत्वं याति कर्मण्यभावम् ॥ २८ ॥

⏑⏑⏑ ⏑⏑⏑ – – – ⏑ – – त्वयापि
स्मर सुभग कुशिष्यस्येव तस्योपदिष्टाः ।
दुरुपशयघनार्तिस्तम्भभाजो जनस्य
श्रुतिपथमवगाढुं न क्षमाः सामवादाः ॥ २९ ॥

तदलमतिविलम्ब्यालम्ब्यतां मन्युवह्नि-
र्व्यतिकरविकरालो धीरहुंकाररौद्रः ।
यदमृदु यदवश्यं यत्प्रभावोर्जितं वा
युधि तदुपदधानाः पात्रतां यान्ति सिद्धेः ॥ ३० ॥

गुरुभरगिरिमन्थक्षोभिताक्षोभ्यसिन्धु-
व्यतिकररसयोग्यावासनावासितेव ।
समभिमतविमर्दा रौद्रकर्मप्रियेषु
प्रसरति रममाणा तादृशेष्वेव लक्ष्मीः ॥ ३१ ॥

अपि नयननिमेषोन्मेषमात्रं समस्ता-
दपरपरिभवार्तं श्लाघ्यमान्यं कृतार्थम् ।

---

27b,M3 सक्तेः for सिक्तेः in M.

28b,M3 तापैस्तादृशां तेजसैव for ०तायै०

29a,M shows lacuna. M3 omits the verse altogether.

30b,M has विकराला and रौद्री. But वह्नि is masculine, hence the change.

c,M3 प्रसङ्गो for प्रमादो or प्रभावो

31b,M भोग्या for योग्या

इममममलिनमिच्छोच्छ्रायमापादयन्तं
क्षणमपि न वियुङ्क्ते पक्षपातादिव श्रीः ॥ ३२ ॥
जगति गतिमदुच्चैर्निर्निवारप्रवृत्तं
सकलमसकलश्रीरेकदेशोद्गतापि ।
शमयति शशिलेखाऽशेषदोषान्धकारं
किमपि बलमलङ्घ्यं पश्य तेजस्वितायाः ॥ ३३ ॥
अपि किमिदमुदाध्वे क्रोधनाः श्यामशोचि-
श्शबलितसकलाशाकाशवक्त्रैस्तनुत्रैः ।
निरवयत वपूंषि क्षोभितध्मायमान-
प्रतिघदहनधूमश्यामलानीव वीराः ॥ ३४ ॥
प्रतिबलगजसैन्यासन्नगन्धानुबन्ध-
प्रकटितपटुदर्पास्फालितैः कर्णतालैः ।
गुरुरणभटनादस्विद्यमानाहवश्री-
व्यजनपवनलीलां कुञ्जराः कल्पयन्तु ॥ ३५ ॥
अवितथमथवैते यूयमस्पृष्टकोपा-
श्चिरमनुदितशौर्यश्रान्ति विश्राम्यतैवम् ।
अयमतिविकटांसो भासुरासिर्ममाजौ
सफलयतु कृतान्ताकाङ्क्षितं बाहुदण्डः ॥ ३६ ॥
क्षितितलफलकेऽस्मिन् सिन्धुसंसक्तलेखा-
वलयिनि भुजवेगास्फालिनि भ्रान्तिभाजौ ।
समहिमहिमहेमक्ष्माधरौ किं करेण
त्रिभुवनजयदीक्षादीक्षितो दोलयामि ॥ ३७ ॥

---

32d,M3 वियुञ्जेत् for वियुङ्क्ते
34b,M3 क्षोभितोदानभान for क्षोभित०
35c,M त्रासिता विद्यमान for स्विद्यमानाहवश्री
37d,M3 दक्षवत् for दीक्षितो

सदसि दलितदृप्तारातिसेनाक्षतोत्थ-
क्षतजजलनिमज्जत्कुञ्जरस्यन्दनाश्वा ।
स्मरतु सुचिरमुर्वी जामदग्न्यप्रसर्पत्-
परुषपरशुपिष्टक्षत्रसर्गोपसर्गम् ॥ ३८ ॥

सपदि नृपतिचक्रं प्रेक्षतां स्फारिताक्षं
क्षितिपतिजयलक्ष्मीं नृत्यमानां* ममाजौ ।
स्वकरतुलितकांस्याकारवेधोऽण्डखण्ड-
क्षितिवलयविशेषाश्लेषसंघट्टघोषैः ॥ ३९ ॥

भवतु नियतिमेधामञ्जरीजातमेत-
ज्जलधिजलकवाटश्लिष्टशैलावनम्रम् ।
मम सुरगिरिवृन्तोद्भेदि भूपीठपुष्पं
धृतघनवनमालाकेशरं कर्णपूरे ॥ ४० ॥

विहितगुरुविकासभ्राजमानप्रवृद्धो-
त्कलिकनृपसरोजं मन्थरोन्मन्थमित्थम् ।
स्फुरदुपधि सुबाहुः क्षिप्रमाक्षिप्य वाक्यं
विचलितभुजदण्डव्यंसितांसो व्यरंसीत् ॥ ४१ ॥

वाक्यं सौबाहवं तत्पवनशतधनुर्बभ्रुजम्भाम्बरीष-
प्रद्योतप्रोथपाण्ड्याः प्रसभमनुपदं तद्रसारब्धपोषैः ।
भावैस्तद्बीजगर्भैर्मुखमिव चरमे सन्धयः सन्दधानाः
पर्जन्यप्राज्यगर्जोर्जितमुदितशिवाः स्फूर्जदूर्जं जगर्जुः ॥ ४२ ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये राजवाक्यं नाम
चतुर्थः सर्गः ॥

---

39d, M3 क्षितितलपरिवेया for क्षितिवलयविशेषा

40a, M has नियत for which नियति is suggested,

42a, M reads here पवन cf. IV, 22. M3 has विभ्र for बभ्रु

b, M3 घोषैः for पोषैः

# अथ पञ्चमः सर्गः

इति तत्र सुबाहुभारतीमनुसन्धातुमवन्ध्यया गिरा ।
गुरुसंगरकाम्यया कथां विदधानेषु नृपेषु निष्ठुरम् ॥ १ ॥
उपयाति रुषाऽऽविले नले बहुसौबाहवसूक्तिशंसया ।
सरसः समतां विजृम्भया विकरालोत्कलिकाविवर्तिनः ॥ २ ॥
फणिनीव मुहुर्मुहुः क्रुधा रसनालिङ्गनसान्द्रसृक्कणि ।
पृथुकम्पवशे सुशर्मणि श्वसति श्वासहुताशकर्कशम् ॥ ३ ॥
कुपिताकुलकालघट्टनाविदलद्दन्तनिनाददारुणम् ।
मृदिताङ्गुलिमर्ममर्मरस्वनितं तन्वति तारमाकृतौ ॥ ४ ॥
रणरूढिकथाभिभाषिणं पवने यौवनभीषणोष्मणि ।
पिबतीव सुबाहुमादरात् सततं संगरशौण्डया दृशा ॥ ५ ॥
वलयीकृतबाहुमण्डलीदृढपर्यङ्कनिवेशनिश्चले ।
स्तिमितस्तिमितं शतध्वजे नृपचक्रस्य मतानि जिघ्रति ॥ ६ ॥
पृथुवेपथुसंगतेर्गदे दशनच्छेदविसंस्थुलस्थितेः ।
स्मितदीधितिदण्डधारणां विदधानेऽधरपल्लवच्चितेः ॥ ७ ॥

---

1d,M3 नृपस्य चेष्टितम् for नृपेषु निष्ठुरम्
2a,M3 वले for नले
3b,M3 लिङ्गित for लिङ्गन
4d,M3 माववौ for माकृतौ
5a,M3 विलापिनं for भिभाषिणं

सदसि दलितदृप्तारातिसेनाक्षतोत्थ-
क्षतजजलनिमज्जत्कुञ्जरस्यन्दनाश्वा ।
स्मरतु सुचिरमुर्वी जामदग्न्यप्रसर्पत्-
परुषपरशुपिष्टक्षत्रसर्गोपसर्गम् ॥ ३८ ॥

सपदि नृपतिचक्रं प्रेक्षतां स्फारिताक्षं
क्षितिपतिजयलक्ष्मीं नृत्यमानां* ममाजौ ।
स्वकरतुलितकांस्याकारवेधोऽण्डखण्ड-
क्षितिवलयविशेषाश्लेषसंघट्टघोषैः ॥ ३९ ॥

भवतु नियतिमेधामञ्जरीजातमेत-
ज्जलधिजलकवाटश्लिष्टशैलावनम्रम् ।
मम सुरगिरिवृन्तोद्भेदि भूपीठपुष्पं
धृतघनवनमालाकेशरं कर्णपूरे ॥ ४० ॥

विहितगुरुविकासभ्राजमानप्रवृद्धो-
त्कलिकनृपसरोजं मन्थरोन्मन्थमित्थम् ।
स्फुरदुपधि सुबाहुः क्षिप्रमाक्षिप्य वाक्यं
विचलितभुजदण्डव्यंसितांसो व्यरंसीत् ॥ ४१ ॥

वाक्यं सौबाहवं तत्पवनशतधनुर्बभ्रुजम्भाम्बरीष-
प्रद्योतप्रोथपाण्ड्याः प्रसभमनुपदं तद्रसारब्धपोषैः ।
भावैस्तद्बीजगर्भैर्मुखमिव चरमे सन्धयः सन्दधानाः
पर्जन्यप्राज्यगर्जोर्जितमुदितशिवाः स्फूर्जदूर्जं जगर्जुः ॥ ४२ ॥

इति श्रीकष्फिणाभ्युदये महाकाव्ये राजवाक्यं नाम
चतुर्थः सर्गः ॥

---

39d, M3 क्षितितलपरिवेषा for क्षितिवलयविशेषा

40a, M has नियत for which नियति is suggested,

42a, M reads here पवन cf. IV, 22. M3 has विभ्र for बभ्रु

b, M3 घोषैः for पोषैः

## अथ पञ्चमः सर्गः

इति तत्र सुबाहुभारतीमनुसन्धातुमवन्ध्यया गिरा ।
गुरुसंगरकाम्यया कथां विदधानेषु नृपेषु निष्ठुरम् ॥ १ ॥
उपयाति रुषाऽऽविले नले बहुसौबाहवसूक्तिशंसया ।
सरसः समतां विजृम्भया विकरालोत्कलिकाविवर्तिनः ॥ २ ॥
फणिनीव मुहुर्मुहुः क्रुधा रसनालिङ्गनसान्द्रसृक्कणि ।
पृथुकम्पवशे सुशर्मणि श्वसति श्वासहुताशकर्कशम् ॥ ३ ॥
कुपिताकुलकालघट्टनाविदलद्दन्तनिनाददारुणम् ।
मृदिताङ्गुलिमर्ममर्मरस्वनितं तन्वति तारमाकृतौ ॥ ४ ॥
रणरूढिकथाभिभाषिणं पवने यौवनभीषणोष्मणि ।
पिबतीव सुबाहुमादरात् सततं संगरशौण्डया दृशा ॥ ५ ॥
वलयीकृतबाहुमण्डलीदृढपर्यङ्कनिवेशनिश्चले ।
स्तिमितस्तिमितं शतध्वजे नृपचक्रस्य मतानि जिघ्रति ॥ ६ ॥
पृथुवेपथुसंगतेर्गदे दशनच्छेदविसंस्थुलस्थितेः ।
स्मितदीधितिदण्डधारणां विदधानेऽधरपल्लवच्युतेः ॥ ७ ॥

---

1d,M3 नृपस्य चेष्टितम् for नृपेषु निष्ठुरम्
2a,M3 वले for नले
3b,M3 लिङ्गित for लिङ्गन
4d,M3 मावतौ for माकृतौ
5a,M3 विलापिनं for भिभाषिणं

गुरुधामनि भूरिधामनि स्फुटमुत्तुङ्गभुजङ्गजृम्भया ।
करपट्टचपेटपीडनैर्भवनस्तम्भवपूंषि पिंषति ॥ ८ ॥
दधति भ्रुकुटीविशङ्कटं नयरोमन्थनमन्थरस्थिति ।
श्वसितानि किरत्करन्धमे करपर्यङ्कनिषण्णमाननम् ॥ ९ ॥
लयलोलितपादपल्लवे रणलाभोत्सवनर्तितभ्रुवि ।
अधरोपरिरोमकूर्चिकां करयुग्मेन बले विमृद्नति ॥ १० ॥
पिबतीव हृदि क्रुधार्चिषां क्षणसन्धुक्षणकाम्ययोद्धतान् ।
विवृतेन मुखेन रुक्मिणि क्षितिपक्षोभभुवो नभस्वतः ॥ ११ ॥
विरचय्य सभाङ्गणक्षितिं श्वसितम्लापितपुष्पसंस्तराम् ।
वदनेन नतेन निश्चलं किमपि ध्यायति भीमभूभुजि ॥ १२ ॥
करवालकरालिते करे युधि यस्यान्तककाङ्क्षिणः क्षणात् ।
दधतेऽङ्गणलाभशालितां त्रिजगद्ग्रासमहामनोरथाः ॥ १३ ॥
सदसि ब्रुवतः पृथुस्फुरत्पलितश्मश्रुमिषेण यस्य सा ।
वहतीव सरस्वतीमुखे चललीलाञ्चितचामरश्रियम् ॥ १४ ॥
रिपुरोगभिषक् स भीष्मकः क्रमशुश्रूषितसभ्यमभ्यधात् ।
नयतत्त्वविमर्शिनीं शनैरशनिं मोहमहागिरेर्गिरम् ॥ १५ ॥
अभिमानमहार्थमूर्जितं यदुदाहारि सुबाहुना वचः ।
उपधित्रयशुद्धितोऽस्य किं कनकस्येव परं परीक्षणम् ॥ १६ ॥
नयनेयधियो महीयसि प्रभुकृत्ये कृतमन्त्रतन्त्रणाः ।
अकथंकथसंकथाः कथं प्रकृतायापि वदेयुरीदृशाः* ॥ १७ ॥
तदपायमपायदर्शनादुपवास्य प्रवितीर्णचोदना ।
मुखर ⏑⏑ – ⏑ – ⏑ – ⏑⏑ – प्रेमणि संमता मतः ॥ १८* ॥

8d,M3 विभ्रति for पिंषति
10d,M3 नले for बले
15a,M3 भिषज्य for भिषक्स
16a,M3 अतिमानि for अभिमान

18 M3 omits from this staza upto 27th, both inclusive. These verses are fragmentary. Scanning is given for the missing portion in each stanza.

क्षममेव पुनः कथां तु न ⏑ ⏑ – नीतिविमर्शदर्शिनीम् (*) ।
नहि जातु भवन्ति भङ्गुरा मतिभूयस्त्वविवेचिताः श्रियः ॥ १९ ॥
विजयाय [भ] ⏑ – ⏑ – ⏑ – ⏑ ⏑ – – ⏑ ⏑ हाय संगमः ।
न (स) हि नैति विपत्तिबन्धुतां निपुणामात्यपरिष्कृतो नृपः ॥ २० ॥
स सखा सुखदुःखयोः समो विजयी शौर्यभुजः प्रजाभुजः ।
अहितान्वि ⏑ – ⏑ – ⏑ – ⏑ ⏑ – – रिवशास्त्रसंस्कृतैः ॥ २१ ॥
कियदप्यत एव वो वयं प्रतिभासानुगतिं दिदृक्षवः (*) ।
उचितं हि पदे श्रिया(र्थि)नामभिधातुं हितसंहितं वचः ॥ २२ ॥
घटिताङ्गमुपायकीलि(ता) ⏑ ⏑ – – ⏑ ⏑ – ⏑ रोन्मता (*) ।
पुरुराज्यपदाधिरोहणे नयनिःश्रेणिरुपैतु हेतुताम् ॥ २३ ॥
विजयस्य परं पदं नयस्तमथो मन्त्रपरिष्कृतं जगुः ।
स धिया सुधियः समेधते ⏑ ⏑ – – ⏑ ⏑ – ⏑ कल्पते ॥ २४ ॥
वशितां परमं परीप्सया क्रमसाध्येऽपि विधौ विधित्सतः ।
किमसांप्रतमप्रपश्यतो निविशन्ते यदसन्न् विपत्तयः ॥ २५ ॥
गुणचक्रविचारचारिणीचरचर्या ⏑ ⏑ – ⏑ – ⏑ – ।
⏑ ⏑ – ⏑ ⏑ – महीभुजो विजिता चार्णवमेखलाक्षितिः ॥ २६ ॥
न विभाति निरुद्यमो नयो न नयातिक्रमकृत्पराक्रमः ।
परमेति हि सिद्धिरिद्धतां नयगर्भव्यवसायसाधिता ॥ २७ ॥
दधते नियतं जिगीषवो भुवमम्भोधिपरिष्कृतां हृदि ।
मनसः कथमन्यथा जये विजयन्ते निखिलं महीतलम् ॥ २८ ॥
तदिहानविधौ विधुन्वता नृपते धैर्यधुरं ⏑ – ⏑ – ।
⏑ ⏑ – ⏑ ⏑ – ⏑ – ⏑ – सुनयक्षेत्रपरिक्षयः क्षणात् ॥ २९ ॥
सकलैरपि नो भवद्धिर्धैर्न परीक्ष्याः प्रतिपक्षसंपदः ।
कुपथा प्रबलात्तरंकिता वरिवस्यास्ति महीभुजे – – ॥ ३०* ॥

29–32 M3 omits

30 M is corrupt in cd

⏑ ⏑ – ⏑ ⏑ – ⏑ – सराज्ञनिभाक्रोध *विराजि राजकम् ।
तदकम्प्रबलः प्रसेनजिद् ध्रुवमश्राव(ग)विश्रुतोऽमुना ॥ ३१ ॥
विबुधास्पदमच्चतत्वमं दधतं बन्धुरजातरूपताम् ।
स्थितिमापुरलङ्कृता नलं परितस्तं परिवार्य भूभृतः ॥ ३२ ॥
कठिनं कुलिशाग्रकुण्ठनप्रथमाचार्यकमेति यद्वपुः ।
सममेष्यति तस्य भेद्यतां न सुखेनाश्मवदश्मके शरः ॥ ३३ ॥
नयशोभितशौर्यशालिना न स भव्यव्यवसायसंपदा ।
मनसेव वियुज्यतेतरामविषादेन निषादभूभृता ॥ ३४ ॥
सहदेवसुरन्ध्रमद्रकद्रुमसौवीरवकश्रुतैर्नतः ।
स गुणैरिव सप्तभिःस्वरैरविनष्टास्य च गीयते सभा ॥ ३५ ॥
इति तत्र निरस्तसंप्लवैश्चिरचिन्त्यत्वमुपागते गुणैः ।
प्रविशन्तु परीप्समीप्सितस्थितये युष्मदुपाययुक्तयः ॥ ३६ ॥
वहनाय मनो महीयसां युगपत् क्रोधतितिक्षयोः क्षमम् ।
प्रविभर्त्युदधिर्विरोधिनी सममेवासमशोचिरम्भसी ॥ ३७ ॥
सुचिरोपचितान् प्रियोचितान् कुलकीर्त्यात्मसुहृत्स्वबान्धवान् ।
समरेण ⏑ – ⏑ – ⏑ – ⏑ ⏑ – – ⏑ सहापहारयेत् ॥ ३८ ॥
त्वदुपायतया तु कश्चन द्विषदोकस्तव शासनात्पुरः ।
रिपुसंप्लवजिष्णुभूभुजां परमास्त्रं खलु दूतभारती ॥ ३९ ॥
प्रहितं हितशंसि पुण्यतो भवता साहसिकैकवृत्तिना ।
न स साम समाहितः समं न महानुग्रहमाशु मंस्यते ॥ ४० ॥

---

31 There is lacuna in the first line.
32 In M3 it occurs after 28.
 b,M3 भूषिताम् for रूपताम्
 d,M omits परितस्तं
35d,M पीयते for गीयते
37c,M3 प्रभवति for प्रविभर्त्यु
38 M3 omits this.
39a,M3 तदुपायभियान्न for त्वदुपायतया तु for this तदुपान्तमियात्तु is suggested.
40d,M3 शस्यते for मंस्यते

यदिवान्तिकमार्तिकंप्रिया (प्रता)* न पथि स्थास्यति तावके तदा ।
न नयान्नपदर्शनान्मनः स्थितिमत्यूर्जितराजिराजकम्* ॥ ४१ ॥
स्फुटया प्रकटीकृताशयः स बभौ भीष्मकभूभुजो गिरा ।
शरदेव विशारदश्रिया नृपचन्द्रोऽथ परं प्रसेदिवान् ॥ ४२ ॥
⏑ ⏑ – ⏑ उपाय चिन्त्यतां नयमार्गोऽतिनिरर्गलागमः ।
विकटांसविशङ्कटो मम स्थित एवायमतोऽन्यथा भुजः ॥ ४३ ॥
वदतीति समं समाहिते विधिवन्मन्त्रभुदुष्म भीष्मके ।
सम – ⏑ ⏑ – ⏑ – ⏑ – कृशितक्रोधविषं मनोऽभवत् ॥ ४४ ॥
न च तस्य रजस्विता तदा ददृशे हर्षुलतैव तु व्यभात् ।
प्रगतानुगतप्रकाशिनी ध्रुवमीदृङ् महतां हि भारती ॥ ४५ ॥
अवसाददुरासदं सदः स समालोक्य चिरं स्वतेजसा ।
अकिरत् करणीयकोविदे नयदिग्दर्शिनि दर्शके दृशम् ॥ ४६ ॥
स समग्रसुखावहं वहन्नथ तस्मै स्मयमानमाननम् ।
द्विषतः पुरि दूत्यमीयिवान् निविशस्वेति निदेशमादिशत् ॥ ४७ ॥
नृपशासनमार्तिशासनं स परं लाभममन्यतादृतः ।
इयमुज्ज्वलतानुजीविनः समये संस्मृतिमेति यत्प्रभोः ॥ ४८ ॥
स चिरस्य निरस्य तत्सदो जनितज्योत्कृति सत्कृतः कृती ।
वव्रृते विवृतद्युतिर्दिशं चरितुं चित्रशिखण्डिमण्डिताम् ॥ ४९ ॥

अत्रान्तरे नृपमुपेत्य विचित्रबाहु-
विद्याधरो मलयकूटतटीकुटीरः ।
प्रीतेरयाचत तमात्मपुरे प्रयाणं
प्रेम्णः फलं खलु परस्पररम्यगोष्ठी ॥ ५० ॥

---

41d,M3 स्मित for स्थिति
42c,M3 हि for वि in विशारद
43, 44 M3 omits these.
45a,M3 जवस्विता for रजस्विता
d,M रभसादृङ् for ध्रुवमीदृङ्
46b,M3 लोच्य for लोक्य
47a,M3 असमग्र for समग्र; स समग्र suggested.
c,M3 भृत्य for दूत्य

तद्वाक्यादथ भूपतिर्विदधिवान् सार्थां तदभ्यर्थनां
सौहार्द्रद्रवसान्द्रवृत्ति सुहृदि प्रस्फार्य चेतः शिवम् ।
शुद्धान्तैः सह शुद्धधीरुदचलद्विद्याधरं गत्वरं
हृष्टं दृष्टनयैरुदूढजगतीराज्यस्थितिर्मन्त्रिभिः ॥ ५१ ॥

इति श्रीकम्फिणाभ्युदये महाकाव्ये दूतसंप्रेषणो
नाम पञ्चमः सर्गः ।

---

51d, M हृष्ट for दृष्ट and मन्त्रवित् for मन्त्रिभिः

# षष्ठः सर्गः ।

अखर्वमौर्वाग्निमिवोदधेः प्लुतं फणीश्वरश्वाससमीरणेरणैः ।
ज्वलत्प्रभाडम्बरचुम्बिताम्बरं प्रकृष्टमैक्षिष्ट स चन्दनाचलम् ॥ १ ॥
श्रितं त्यजद्भिः शमिभिः शरीरादरीनतान्तं बदरीनतान्तम् ।
श्रियं श्रियन्तं शकुनिप्रवृत्तमुदारवप्रांशुमुदारवप्राम् ॥ २ ॥
स्फीताम्बरप्लावि विशालशृङ्गं ज्योतीरसज्योतिषमङ्गसूतेः ।
बालस्य सन्दर्शनकाम्ययेन्दोर्या साधुदुग्धाब्धिमिवोज्जिहानम् ॥ ३ ॥
अमन्दमुद्यद्रसुधामहासा सुधामहासानुमलंचकार ।
उद्दामधीरध्वनिकुञ्जरायं निकुञ्जरायं दधती तटोर्वी ॥ ४ ॥
यस्याग्रभूः श्यामलमेघमालासन्नद्धजाम्बूनदसानुरेति ।
अन्तर्नितान्तज्वलदुज्ज्वलार्चिरुद्धूमदावानलजाललीलाम् ॥ ५ ॥
यत्रालसप्रक्रमसारसालं मसारसालं दधती धिनोति ।
आक्रीडभूरच्छिदुरापरागे दुरापरागेऽपि रतिं दधाना ॥ ६ ॥
यत्कानने विश्रमकाम्ययेव सचन्दनाश्लेषविशेषशीते ।
निजोष्मभीष्मार्चिरुदूढतान्तिर्दधाति दीप्रांशुरसव्ययात्राम् ॥ ७ ॥

---

3a, M पीताम्बर for स्फीताम्बर
b, M अङ्गसूत्रे for अङ्कसूते in M3; अङ्गसूतेः suggested
5d, M मालिनीव for जाललीलां
6a, M3 रस for ०लस०
c, M3 भूभृ० for भूर०
7c, M3 तातिं or तान्ति for तान्त in M for which तान्तिः is suggested.

परं पदं कामिचमूरतानां वोढारमूर्वीं स चमूरतानाम् ।
इन्दुर्ज्वलत्याशु विहायसायं सदंशुमत्तामविहाय सायम् ॥ ८ ॥
तदुत्सुकान्तश्वरबन्धुभूभृदभ्यर्थनप्रेरणयेव नूनम् ।
करोति यस्यावतराय कुक्षौ वीचीकराकर्षणमम्बुराशिः ॥ ९ ॥
स मुद्रतारम्भरता यदङ्के समुद्रतारं भरतान्ववायाः ।
विभावयन्ति स्मयतो निशानां विभावयन्ति स्म यतो लयं भाः ॥ १० ॥
अथाचलालोकनलोललोचनं विलोक्य विश्रम्भभुवं भुवः पतिम् ।
जगे वचश्चारु विचित्रबाहुना गिरः सुहृत्सौख्यफला हि वाग्मिनाम् ॥ ११ ॥
कुसुमसुधामलयोऽगस्तनुते यस्मिन्वपुः सुधामलयोगः ।
सुरवसुधामलयोगस्येन्द्र स्याच्छैष सोऽसुधामलयोगः* ॥ १२ ॥
उद्धूतधातुधृतकुङ्कुमपङ्कपिङ्गतुङ्गोत्तमाङ्गभृतपुष्कलपुष्पराशेः ।
द्यौरङ्कमस्य दयितेव ततोड्डहारधाराधिरोहति धराधरनायकस्य ॥ १३ ॥
नय समयावमयावः प्रोक्तं प्रीतं गता मयावमयावः ।
मां समया वमयाव श्रावितमद्रिं प्रकामयावमयावः* ॥ १४ ॥
द्विपदीपदतालयोगभाजः सहसारङ्गवराहरासभाजः ।
दधते रसभावलास्यशोभां सममेषोऽद्रिरिमा नटस्त्रियश्च ॥ १५ ॥
एषैव या नियतमस्य शिरोऽग्रभूमि-
भव्या सभा मघवतोहितरेफलोपाम् ।

---

8a,M3 कार्मवसूरतानां for कामिचमूरतानाम्
b,M3 मुन्नीयवसूरतानां for मूर्वीं स चमूरतानाम्
10c,M3 विद्रावयन्ति for विभावयन्ति; in d as well.
d,M3 नगंताः for लयं भाः
11c,M3 वादिना for वाहुना
d,M3 फलं हि for फला हि
12a,M3 स्त्वनुते for स्तनुते
d,M3 स्याच्छैय सो for स्यतांसो in M
14M3 reads
नयसमयीवमयाव प्रोक्तं । प्रीर्तिं गता मयावमयाव ।
मा समयावमयाव श्रावि । तामर्द्रिं प्रकाममयावमयावः।
15a,M भासः for भाजः
c,M3 लास for लास्य
d,M3 स्तट for नट

नायं तपोवनभुवश्च बिभर्त्यदूरे
भव्यासभा मघवतो हितरेफलोपाम् ॥ १६ ॥
प्रकृतिविकासिना कटकिना सुतरा-
मभिमतसामजाततरसा बलिना ।
अलममलः समाक्रमितुमेष मही-
मनुनयवर्त्मनेव नृपतिर्वपुषा ॥ १७ ॥
वहति गोव्रजमण्डलमार्तता हृदयमुत्कटकम्बलवल्लवि ।
इह रघोरकरोन्मृगया वनं सदयमुत्कटकम्बलवल्लवि ॥ १८ ॥
प्रेमोदयार्द्रमनसां न हि कामिनीनां
प्रेयस्यशक्यमिह किञ्चदतीव वक्तुम् ।
अस्य द्युचुम्बिनि तटे तरणेर्नलिन्यः
श्लिष्टं पिबन्त्यपि जगत्त्रयतापि तेजः ॥ १९ ॥
इह यां द्युतिं खगसभारतीरामया
नुदिता सरित्तरुषु भारती रामया ।
ध्रियते प्रियोऽत्र रसभारती रामया
स्मरसङ्गमादलसभारती रामया ॥ २० ॥
इह विरचितमूर्द्धवर्णशोभासुरतरुजा करणे हितस्वभावा ।
लसति न वसुधामरालतारा नटवनितेव रसेषु काननेषु ॥ २१ ॥
घण्टावली वहति न स्थितमन्त्रनद्ध-
कम्पारवा शकलवादरतोरणेषु ।

---

16a,M3 साच नियमे for या नियतमस्य
b,M3 लोयां for लोपां or लोफां in M
17c,M3 अनल for अमलः
d ननु नय for मनुनय
18a,M3 मात्तता for मार्तता
c,M मह्ना for वनं
19d,M3 शिष्टं for श्लिष्टं
20a,M या द्युती for यां द्युतिं in M3
b,M सरभस for सरित्तरुषु
c,M3 प्रियानुसर for प्रियोऽत्र रस
21c,M3 लपति for लसति

षड्वैरिजेषु मुनिपार्षदलब्धशक्तिः
कम्पारवाशकलवादरतोरणेषु ॥ २२ ॥

कृतनन्दनाङ्गदमलं क्षमया शतमाहितं शुभविभागहनम् ।
वृतदक्षिणांसमभिजातरुचिं प्रणमन्त्यमुं जिनमिवेह जनाः ॥ २३ ॥

को नाम नातिथिरिहाश्रमकन्यकानां
वाचा रमेत मधुरस्वरयारसेन ।
सर्वेषु शान्तिरुचितेति न धर्मवृत्ता
वाचारमेतमधुरस्वरयारसेन ॥ २४ ॥

अस्योत्सङ्गासङ्गमणिप्राकटमूर्तेः
स्वं पश्यन्त्यश्मारुणि चामीकरवप्रे ।
स्वःसुन्दर्यः कल्पितुमाकल्पमनल्पं
रत्नादर्शं मङ्गलमित्येव वहन्ति ॥ २५ ॥

स्फुटयति कटकोर्वीरस्य विभ्रत्करौघं
विषदनमवसन्ना दीप्रभोपत्यकामाः ।
अपि मदयति भृङ्गस्तापसीः पुष्पितेऽस्मिन्
विषदनमवसन्ना दीप्रभोपत्यकामाः ॥ २६ ॥

मन्दारमन्दिरपुरन्दरनन्दनोर्वी-
मन्दीकृताद्रिवरमन्दरकन्दरश्रीः ।
उत्कन्दकुन्ददलसुन्दरसिन्धुवार-
सन्दोहसान्द्रमकरन्दमदोषमास्ते ॥ २७ ॥

---

22a,M3 वलयिनि for वहति न
b,M3 रवां for रवा and शकवला at both places; while M varies between शकबला and शकल्वा
23b,M3 गत for शत
24a,M3 नातिथिमिहा for नातिथिरिहा
b,M3 मधुरं for मधुर
c,M3 सर्वेष्ट for सर्वेषु
d,M3 has स्मरया for स्वरया
25b,M3 सं, स्वं is suggested.
dM, वदन्ति for which वहन्ति is suggested.
26a,M कपौघं for करौघं
b,M3 गत्य for पत्य

बिभर्ति भूरत्र वनं करालं कालीयकामानलतापमिद्धम् ।
काली शमन्ती रमणस्य कण्ठे कालीयकामानलतापमिद्धम् ॥ २८ ॥
आकर्ण्य तां विकलकोमलकिन्नरस्त्री-
गीतक्रियां श्रवणबोधितरथ्यरङ्गम् ।
नश्यन्निमेषमुनिमण्डलदृष्टि दृष्टः
प्राप्तोऽत्र दीर्घयति वासरमुष्णरश्मिः ॥ २९ ॥
इह पल्वलचारिणां रवे विषरोमन्थकषायतारसात् ।
जलधेरधिकः परोऽम्भसां विपरो मन्थकषायतारसात् ॥ ३० ॥
मन्दस्यन्दं सुन्दरविद्याधरनारीगीतस्वानं बन्धुरमाकर्ण्य रसेन ।
नानातालन्यासयुताः शिक्षितुमुच्चैरभ्यस्यन्तीवप्रतिनादैरिह दर्यः ॥ ३१ ॥
सरति मरुति नाम्बुदसस्वनैः कलममणिशशाङ्ककासारता ।
विरहमिह न सोढुमत्रोच्छ्वसत् कलममणिशशाङ्ककासारता ॥ ३२ ॥
सुरशोषया विकल – ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ करवालधारया* ।
मदनाभियानसमरागतान्तया भुवि भाति शूरशबरश्रियाप्ययम् ॥ ३३ ॥
इह वहति सरिति संश्रितनलदमयन्तीरतारसेवाविरलम् ।
स्थितयुवमिथुनास्य तटी नलदमयन्तीरतारसेवाविरलम् ॥ ३४ ॥
नैर्मल्यप्रतिफलितस्फुटेन्दुरागाः शर्वर्यां मरकतरत्नसानुभागाः ।
कल्हारोच्छ्वसितसरःसमूहभासो भृङ्गाणां विदधति विप्रलम्भमस्मिन् ॥३५॥
पुण्यात्मैष गिरिर्विनोपकरणैः प्रस्तौति शालिश्रियं
केदारेषु मदारसत्कुररया कारानलिन्यासतः ।

---

28a, M3 करार्थं for करालं
c, M3 नागी for काली
29b, M3 रथ्यरंगः for रथ्यरङ्गं
c, M पश्यन् for नश्यन्
30a, M3 वारिणां for चारिणां
c, M3 शरो for परो
31a, M3 मन्यस्वन्यं for मन्दस्यन्दं
d, M ०वप्रति० for ०पर्वत०
33, M3 omits this
35a, M स्फुटोत्सार for स्फुटेन्दुरागाः

पद्मानां वहते तथा परिमलान्यस्मिन् वहन्तः कृताः
केदारेषु मदारसत्कुररया कारानलिन्यासतः ॥ ३६ ॥

दृष्ट्वा कुविलाश्रवातं श्रवती बिभ्राणोऽयं सानुभरन्ध्रः पुरन्ध्रः ।
शुद्धः शुद्धातश्रियं संविधत्ते कोऽ ..................व्यः* ॥ ३७ ॥

कामनोज्ञोल्लसल्लासहंसानवः* काननं प्राप्य लीलासहं सानवः ।
बिभ्रते हारितां हासदामालया रम्यया शाखिनां हासदामालया ॥ ३८ ॥

प्रविघटितविकटदलपुट......
स्फुटधवलकमलकुहरचलदलिः ।
त्वदभिगमनरसरभसतरलित-
प्रकटनयन इव वहति रुचमयम् ॥ ३९ ॥

यो पां पृषल्लुरुदकारय – ⏑ – ⏑
– – ⏑ – ⏑ रसिकाङ्कुरराजिरेणुः ।
अस्मिन्वलिन्यपि यतो नतिमे ⏑ – –
वासन्तहासरसिकाङ्कुरराजिरेणुः ॥ ४० ॥

वृष्टिच्छेदाशंसिचलाखण्डलचाप-
भ्रान्तित्रासायासपरिम्लापितपिच्छान् ।
रत्नच्छायोच्छ्रायसमाच्छादितमेघः
प्रावृट्कालेऽपि व्यथयत्येष मयूरान् ॥ ४१ ॥

अमुं निदानं विदुरायतीनां नेह प्रभावाश्छिदुरा यतीनाम् ।
अताडनैः कार्मुकमाविलेषु – ⏑ ⏑ – – ⏑ ⏑ माविलेषु ॥ ४२ ॥

---

36a,M3 प्रस्तौति for प्रस्तौति
b,M3 कारालवि० for कारानलि०
c,M3 कस्मिन् for न्यस्मिन्
37M3 omits this.
39b,M3 वल्दलिः for चलदलिः
40,M3 omits this.
41a,M3 दृष्टि for वृष्टि
d,M3 एव for एष
42,M3 omits.

अत्युज्ज्वलोर्मिकमहाकटकप्रकाश-
मुच्चैरुदूढघनसारपरागपूरम् ।
मध्ये निषण्णदिननायकमाहुरेनं
हेमाङ्गदेहमिव भूभुजमन्दभावम्* ॥ ४३ ॥

............कलकण्ठोपकण्ठा माराकल्पा जय्यकल्पाकरामा ।
वर्यात्कुर्यात् कस्य नानन्दमेषां राधन्याधानधन्याधरामा* ॥ ४४ ॥

स शिवमिह सदाकृतप्रकाशं नवविषमेषुमदेन संप्रसक्तम् ।
स्वरुचिकपिशितासमांसमद्रिर्वहति भुवानमयं च ये˘चक्रम्* ॥ ४५ ॥

यो नाम योगभृदिह प्रतनोति बुद्धः
सङ्गागमस्तिमितमन्दरसानुतत्त्वम् ।
प्राप्नोति तुङ्गतरशृङ्गतयाऽभिभूत-
सङ्गागमस्तिमितमन्दरसानुतत्त्वम् ॥ ४६ ॥

गुरुरन्ध्रसमीरणानुषङ्गात् तरुभिः सानुषु सन्ततं चलद्भिः ।
क्रमिनोऽन्तिकमायतः खरांशोर्व्यजनैर्वीजयतीव वाजिनोऽयम् ॥ ४७ ॥

अस्मै विस्मायिभासे ननु नमति न कः पापिनां वृत्तमुच्चै-
रत्नोदीयानपात्रेऽध्वनिधनमलिनां सारसांयात्रिकानाम् ।
धत्ते* लीलागतिः सा भृशमिह सुदृशां कानने चैष धत्ते
रत्नोदीयानपात्रे ध्वनिधनमलिनां सारसांयात्रिकानाम् ॥ ४८ ॥

उच्चोच्चचन्दनतरूत्तरसालसक्त-
सर्पप्रसर्पिफणफूत्कृतधूमपूरम् ।

---

44,M3 omits.

45a,M3 स नवमिह सदातपप्रकाशं

c,M3 शमायमद्रिः for समांसमद्रिः

d,M3 विहतयुवानमयं नधक्षरक्तम्*

46a,M3 योगवृद् for योगभृद; बुद्धी for बुद्धः

c,M शृङ्गगते for तुङ्गतर

47b,M3 वलद्भिः for चलद्भिः

c,M3 मागतः for मायतः and शराङ्गो for खरांशोः

48a,M3 विस्मापितारो for विस्मायिभासे, मूर्तं for वृत्तम्

b,M3 पातेष्व० for पात्रेऽध्व and सालसांपातिकानाम् for सारसांयात्रिकानाम्

अत्रैत्य लोचनकुलं तरणेस्तुरङ्गा
अङ्ग त्वणां क्षुभितकूबरि कूणयन्ति ॥ ४९ ॥
भयापनीभूरिभयापनीभूरनाविलास्यामरनाविलास्या ।
विराजतीभारविराजतीभावराजिरामाधवराजिरामा ॥ ५० ॥
रागोपात्तैर्युवभिरव* भृङ्गारैर्गोसंपातैरुपवनरतिसंचारैः ।
अश्रान्त्यैव श्रमशमनसरोमन्थैर्लोकैनाराध्यत इह न चिरादुच्चैः ॥ ५१ ॥
भवति कुञ्जदरीं गहनां गिरेरविरमज्जनकाममहानितः ।
रतिगृहांश्च बिभर्त्ययमुच्चकैरविरमज्जनकाममहानितः ॥ ५२ ॥
शयितकराल – ⏑ ⏑ ⏑ – ⏑ – दतीनां
गहनगृहेऽस्य सालवकुले सखीव सौख्यम् ।
दिशति निशि प्रवेश्य शनकैः प्रियेन्दुपादान्
विकटदल ⏑ – ⏑ ⏑ ⏑ – ⏑ यत्र वात्या ॥ ५३ ॥
वपुषि ललितां भूषां गत्या पुरन्ध्रिजनः कुचै-
र्नवनखचितैरुच्चक्रान्तैरतीतनदीनते ।
इह मणिमयैः सिन्धुः प्रीत्यै ततस्तरुभिस्तटे
नवनखचितैरुच्चक्रान्तैरतीतनदीनते ॥ ५४ ॥
प्राग्भारदीर्घदृषदुत्थितनिर्झराम्बु-
लम्बिप्रवाहविकरालकरः करोति ।
सिन्दूरसुन्दरपरागपिशङ्गमूर्धा
रम्भाविजृम्भितरदोऽयमिभानुकारम् ॥ ५५ ॥

---

49d,M अङ्गं for अङ्ग
51a,M3 युवतीभिरिव सश्रृङ्गारैः
b,M3 उपनतवनसंचारैः
52b,M3 ०रचिर for ०रविर
53,M3 omits.
54a,M3 पत्न्यां for गत्या
b,M3 नवनगततैः for नवनखचितैः
c,M3 सिन्धू पीत्यै तत्तरुभिश्च तैः for the above.
d,M3 नदानते for नदीनते ।
55a,M3 प्राकार for प्राग्भार

कमलदलावलिस्थलमिहाधितिष्ठति निरङ्कुशं कुशचलद्-
गलदलिसादरङ्कुमुदयोषितं न रजनीकरोपमलया ।
व्रजति च तृप्तिमतिहि* चिरस्य परिरभ्य रागरभसाद्
गलदलिसादरं कुमुदयोषितं न रजनीकरोपमलया ॥ ५६ ॥

लक्ष्मीलक्ष्यैर्लत्तश इन्दीवरनीलैः
फेनस्फीतैस्तीर्थविलैर्नागपतीनाम् ।
व्याप्तो भूभृत्सर्वत एषोऽनुविधत्ते
हर्षोत्फुल्लल्लोचनसंघस्य मघोनः ॥ ५७ ॥

इह भूः समूढनवनीरतावर्यमा
नुतिमर्हतीन नवनीरतावर्यमा ।
भ्रमति प्रवृद्धरतिमेखलापद्धतिं
मुनिरातनोति च शमे खलापद्धतिम् ॥ ५८ ॥

देहं पयोपदधातीह* स बोधिसत्त्वः पयो भुजङ्गमभुजे पतताम् ।
अलमशङ्कत सङ्गसङ्गिना श्रीमुखाम्बुरुहचुम्बनतन्तुचक्रे* ॥ ५९ ॥

अचल एष चकास्ति सुरश्रियां कुररकीसकिराततयानया ।
जगति कुञ्जभुवास्य विराजितं कुररकीसकिराततयानया ॥ ६० ॥

अमी दृश्यन्तेऽद्रेः सविधजलधिद्वीपलुठिताः
सुपर्णक्षुण्णानामिह फणवतामस्थिनिचयाः ।
वकर्ष तत्वर्या नु वर गतरागा *
हस्तैर्जव शिखिनिध्भापनया * ॥ ६१ ॥

विकसति मरुदिह मृदुचल-
दलकमनललोहितेन वदनेनायम् ।

---

56a,M3 वहद् for चलद्
b,M3 अलसादरं for अलिसादरं and पोषितं for योषितं

58 and 59,M3 omits.
60b,M3 यानघा for यानया
61,M3 omits.

सुभटः श्लिष्यति कोपा-
दलकमनललोहितेन वदनेनायम् ॥ ६२ ॥
⏑⏑⏑खरमिहासौ रत्नरम्भाशिखाग्रे
स्फुरितविमलपत्रः प्राप्य विम्बप्रतिष्ठाम् ।
करफलित*धातूद्धूतरेणुर्विवस्वान्
भवति सरलनालोत्तालताम्रोत्पलानि ॥ ६३ ॥
सप्तरसःकलासु त्याचरं सप्रसरं च पीत्या ।
इह प्रियश्चुम्बति चारुचाटुलीलाविलेव लीलाम्* ॥ ६४ ॥
ध्यानाष्टके गतिविपर्ययमार्यसत्यै-
र्दप्तेन्द्रिया ⏑⏑⏑ – ⏑⏑ – ⏑ नद्या ।
धातुत्रयापचयतः प्रतिसंविदर्ह-
मर्हत्त्वशुस्त्य * षडभिज्ञमवाप्नुवन्ति ॥ ६५ ॥
सुरतास्थया प्रणतता सुरता समयं गताः सुरविलासमयम् ।
ददते प्र – ⏑⏑⏑ – (ददते) दयिते हि नः सुरभसादयिते ॥ ६६ ॥
स्तौति केसरिकुलं द्रुतनागी मर्कटं कृतमदश्चितयानः ।
ग्रीवया * सुदमगभृ * गरिष्ठा मर्कटं कृतमदश्चितयानः ॥ ६७ ॥
इहास्थितो नियमसमुत्थया मुनिः
समुच्चकैरधितरुचाभिपूषणाम् ।
गिरं शतैरिदमपि नाददे प्रिया
समुच्चकैरधितरुचाभिपूषणाम् ॥ ६८ ॥
स्यन्दनस्य शिखरैरयंसतां दक्षिणोदतिरयं प्रभावतः ।
आश्रवानिह न बोधिबन्धुरा दक्षिणोदतिरयं प्रभावतः ॥ ६९ ॥

---

62b,M मलन for मनल
c,M3 सुरभिः for सुभटः and दल्कि for दलक
63–66, M3 omits.
68b,M3 चारु for चाभि
69a,M3 रसौ स्यतां for रयंसतां
c,M3 बबोध for नबोधि

नारीसंहतिरत्र पातुमशितुं रन्तुं वरीतुं वरं
दान्तं शान्तमुदासितामयुगतानाशारतालापिनी ।
राजीजीवपतत्रिणां स्थितिमियं रत्नस्थलीष्वादराद्
दान्तं शान्तमुदासिता मयुगता नाशारता लापिनी ॥ ७० ॥

नार्यो दिशन्त्यागसि रागयुक्तेरसाम यूनां न वचो दयन्ते ।
नाट्याय चेतोऽत्र च नाटकीया रसा मयूनां नव चोदयन्ते ॥ ७१ ॥

रुचिरचितप्रमोदलवलीकलताभवनः
स्मरमयतीरतारतिमिरारिकनावदरः ।
रुचिरचितप्रमोदलवलीकलताभवनः
स्मरमयतीरतारतिमिरारिकनावदरः ॥ ७२ ॥

( समुद्गकः )

दग्धमपि स्मरं घटयति स्फुटमुपवनभू-
रत्नपरागता सुमनसा मनसिजवनतः ।
घट्टनतोऽत्र भ्रमन्नृपगणो यत इह *
रत्नपरागता सुमनसा मनसिजवनतः ॥ ७३ ॥

ननजज पापा वव प्रप्र पापा
मम रर वपा स्वभ द्रद्र पापा ।
विवि धुधुतत पापा ... ...
ररयय पापा खखनन जजपापाऽययत्रत्रपापा* ॥ ७४ ॥

इत्थं गुणादि दिशते सुखमल्पमुर्वी
सारावता समवना विवराहितान्ता ।

---

70b,M3 मुपासिता for मुदासिता
a,M3 नार्व्यो दशत्याशशि for the above
71b,M3 रसादयूनां for रसाम यूनां
bM3 वनोदयन्ते for वचोदयन्ते
73b,M3 रत्नुपरागता for रत्नपरागता
c,M घटनतो for घट्टनतो
75a,M मुख for सुख
b,M3 पारावता for सारावता
c,M3 शीत for स्फीत

स्फीतप्रसक्तफलिनी सफला फलेषु
सारावता समवना विवराहितान्ता ॥ ७५ ॥

महतीवादनवासानतानसा वानदवा ।
हरति तटी च पथा वादनवासा नतानसा वानदवा* ॥ ७६ ॥
( यमकप्रतिलोमबन्धः )

योगान्धारः कुर्वाणानां
बलोनुतर्षि भरोचिसो लानो नापन्ना षारः
सकल मवसुध वशरणो नुकम्पितपोतकः ।
मञ्जूषा भाषा मस्ति मानलिन नवविशदहिततः
कुलेशोराजीवैहीनः समररसित विसरित-
वपः समाराध राजित* ॥ ७७ ॥

एष महीभृत्प्रविदधदशनैः शाश्वतिकाश्रितशुचिशशिभाभिः ।
कैरवमानं सुरसवनमितः सागरयोजननयनदगेहः ॥ ७८ ॥
द्यामवदार्य स्थित इह शिखरैस्तुङ्गतटे जगति न्युपनीतः ।
कैरवमानं सुरसवनमितः सागरयोजननयनदगेहः ॥ ७९ ॥

वासवासतान्वमानमान्वतासवासवा
तापनीयनीलपाल्यपालनीयनीपता ।
सीमतारपादपारपादपारतामसी
भीमतासिभा चकास्ति काचभासितामभी ॥ ८० ॥
(प्रतिपादप्रतिलोमः)

अस्मिन्नास्ते सैन्यं सैन्यं नयन नयम नवम वमम ममम ।
शाखां शीतां श्लिष्यत्युच्चैरहित रहित रत रव रदितम तम* ॥ ८१ ॥

---

76,77,M3 omits. Readings in 77 are hopelessly corrupt.
78b,M3 शुचिगिराभिः
79M3 b,M3 तुङ्गतटस्तु जगति ननु नीतः ।
80,M3 omits.
81,82 readings are very corrupt.

बिभ्रत्यम्भो नद्यः कीर्ण शरशरशर सिक सिकतिल तिल ।
हेमक्षोदैरन्तः क्रीडति शक शक लक लक कशि महि महि* ॥ ८२ ॥
(आवलिः)

पुलकभुवाम्बुना नटभासतासिहरसोदय-
सविकला नवभरवधाविनयतानतारभवन ।
भवति नचेह चन्दनवनं विषक्तविषपौघसंघटतया
दिनकरपपाटितशिलातलाशितटिशापभारमकनदि* ॥ ८३ ॥
(ललितम्)

नेत्राकृष्टैरिहाधिव्रजमलसलसद्धल्लवीदोर्लताभिः
कीर्य्यन्ते शीकरौघाः सकलशिवलता नावनीता मथापि ।
भृङ्गश्रेणी च तुङ्गाङ्गणमणिरधुनाधःकृताशेषशैला
कुर्वाणेनात्मतुष्टिं सकलशिवलतानावनीतामथापि ॥ ८४ ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये पर्वतवर्णनो
नाम षष्ठः सर्गः ॥

---

83,M3 omits. Reading are very corrupt. 84d,M नान्त for नात्म

## सप्तमः सर्गः

इत्थं तास्ताःक्ष्माधरवस्तुस्तुतिगर्भाः श्रुत्वा श्रव्या विश्रुतविद्याधरवाचः ।
शैलोत्सङ्गश्रीपरिभोगस्पृहयालुः स प्रास्तावीत् संस्तुतमाक्रीडविहारम् ॥ १ ॥
क्षोणीक्षोदः क्ष्मापतिविश्वाश्वशफाश्मक्षोभक्षुण्णो द्यामनवद्यामुदमज्जत् ।
बिभ्रद् भूभृद्भूरिविमर्दातुललीलापीडोड्डीनो डामरभूविम्बविडम्बम् ॥ २ ॥
अद्रिर्वातायातविकम्पिद्रुमबाहुः सेना सा चोदस्तरजोराजिदुकूला ।
इत्यन्योऽन्यं कम्पपराङ्गं घटमानौ प्रास्ताविष्टामिष्टवदुच्चैः परिरम्भम् ॥ ३ ॥
दानोद्दामस्यन्दजुषो गन्धगजेन्द्राः श्लिष्यन्तोऽधः क्ष्माधरराजस्य विरेजुः ।
स्थेयस्थानं बन्धुमनीकोद्वहनार्थं पृथ्वीपृष्ठे प्रष्ठविवृद्धाः इव पादाः ॥ ४ ॥
यैरागत्यानन्तचमूचक्रमहिम्नो धूलिव्राताद्बाह्लिकसारैर्निरसारि ।
ते दुग्धाब्धेर्निर्यति लोकस्य विवृद्धामालोकेच्छां चिच्छिदुरुच्चैःश्रवसि प्राक् ॥ ५ ॥
संक्रान्तस्वाकारकरालाः स्फटिकोर्वीगर्वाखर्वं पश्यदधोऽन्यद्विपशङ्कम् ।
नासास्फोटस्फालितनिर्घोषविषाणक्रोधायस्तं हास्तिकमस्ताङ्कुशमासीत् ॥ ६ ॥
क्षुण्णं क्षोदं मुद्गभुजां पादसमूहैरुद्यम्याद्रिर्व्योमविसर्पिस्फटिकानाम् ।
पूषोष्माणं रोद्धुमिवाम्भोदवितानं तेने भक्त्या भूपतिशुद्धान्तवधूनाम् ॥ ७ ॥
अर्कज्योतिर्म्लानि महानीलशिलोत्थं पक्ष्मप्रान्तातिथ्यमथो तथ्यमवाप्य ।
सान्द्रच्छायाराजि रजो जातमभीक्ष्णं राजस्त्रीणामञ्जनमक्षुण्णकमक्ष्णाम् ॥ ८ ॥

---

1a,M3 तस्य for तास्ताः b,M3 श्राव्या विसृत for श्रव्या विश्रुत

उद्बङ्कन्तः कुट्टितकूटैः खरटङ्कैरङ्केष्वद्रेर्द्रावितसारङ्गतुरङ्गाः ।
भूम्ना भूभृत्यश्वमुखीं वीक्ष्य समन्तं हर्षोत्कर्षान्नर्त्तमिवोद्वृत्तमकार्षुः ॥ ९ ॥
पर्याणाग्रोत्कीर्णनियन्तारमनीचैरारोहन्तं सोत्सुकमश्वं प्रसुकायाम् ।
तस्थौ सादी सा च कषाघातविधूतं दुद्रावोग्रं प्रग्रहमन्यः परिवञ्च्य ॥ १० ॥
वातायत्तावेल्लपताकाकदलीकैरावल्गद्भिः सानुषु रेजे गजराजैः ।
शैलाभ्याशाभ्यागतपूजोचितभूभृत्सत्कारव्यानम्रचलच्छृङ्गशिरःश्रीः ॥ ११ ॥
सूत्कारेण प्राज्यतरेण द्विरदानां सद्यः श्रोत्रातिथ्यकृता विद्रुतनिद्राः ।
सिंहाः सैन्यं मूर्च्छितमाभुज्य दृशोऽद्रौ स्थानं रोद्धुं बन्धुरताबन्धु बबन्धुः ॥ १२ ॥
नेमिस्वानारूढघनौघध्वनिशङ्काः केकावन्तः कीर्णकरालोच्छ्रितपिच्छाः ।
शोभां बभ्रुर्भूपतिसंभोगसुखार्थं शैलश्रीभिः संभृतवेशा इव केशाः ॥ १३ ॥
क्रान्तस्कन्धाः पाकपुरस्कारसहस्रैः प्राप्ताः पूर्वं प्राणिवधायासवपूगैः ।
मृष्टौ कृष्टाश्मान्तकमारालिकलोकैः कृत्यारम्भं सद्मसु माहानसमूहुः ॥ १४ ॥
आक्रीडेषूत्तुङ्गतुलामण्डपदण्डस्कन्धोदग्रान् बन्धुरमुद्ग्रन्थिगुणौघान् ।
मत्वा श्लिष्टान् चन्दनवृक्षेषु महाहीन् यष्ट्याकृष्टान् दृष्टिविलोलं व्यपनिन्युः ॥१५॥
वस्त्रव्रातव्युष्टवधूविभ्रमवासं कृष्टालान्य* पौरपृथक्प्रस्तुतवस्त्यम् ।
......मन्दुरमन्द्रै* चक्रुः सैन्यान्याशु निवेशं शिबिरस्य ॥ १६ ॥
गुप्तं मीलद्गोपुरमप्यर्गलवर्गैः प्राकाराग्रोल्लङ्घनलव्याङ्गणमार्गाः ।
त्रस्तक्रन्दद्गोपकुलं केऽपि कुटीरं तत्रत्यानामावसथार्थं व्यपजह्रुः ॥ १७ ॥

9d,M3 वृत्त for नर्त्त
10a,M3 पाषाण for पर्याण
c,M3 शीविकषा (शावकषा) for सा च कषा in M
d,M3 प्राक् for उग्रं
11a,M3 वल्लि for वेल्ल
b,M आवल्लद्भिः for आवल्गद्भिः
b,M3 सानुभिः for सानुषु
c,M3 शृङ्गार्जित for पूजोचित
d,M3 वलश्शृङ्ग for चलच्छृङ्ग
12a,M3 सीत्कार for सूत्कार
c,M3 सूर्जितमाभुज्य दृशाद्रौ for मूर्च्छितमाभुज्य दृशोऽद्रौ
d,M योद्धुं for रोद्धुं
14,Not found in M3.
15b,M ०द्व० for ०न्ध०
c,M3 कार्शा (कार्श्यात्) श्लिष्यन् वर्णक० for मत्वा श्लिष्टान् चन्दन०
16,It is fragmentary and missing in M3.
17a,M3 सुप्तं for गुप्तं; M3 वर्चो for वर्गैः
c,M3 त्रस्तुः क्रन्वत्या कुलकं कोऽपि
d,M3 परिचक्रुः for व्यपजह्रुः

पर्याणान्तःपीडनमन्योरुविहारा राज्ञ्यः कूजन्नूपुरमश्वादवतीर्य ।
संप्राविक्षन् वर्षवरालम्बितहस्ताः शुद्धान्तेषु प्रत्नपलिक्नीपरिवाराः ॥ १८ ॥
राजस्त्रीणां सक्तनवालक्तकरक्तैः स्पृष्टः पादैः पद्मपलाशोपमरूपैः ।
आसीदद्रिः पुष्कलसस्यौघमिषेण व्यक्तं हर्षोदञ्चितरोमाञ्चवपुःश्रीः ॥ १९ ॥
आलोक्योच्चैरध्वनि वैहङ्गममङ्गं ग्राम्यस्याशायुक्तकृतप्रेषणभाजः ।
कोटेरन्वग्वीथि वृथाध्यायितशूलं श्रान्ताः श्रेण्या वैवधिका वीवधमूहुः ॥ २० ॥
क्रोधाविद्धो लुण्ठितसंतुष्ट्या दुःखान्धः* क्रान्तावासः कोऽपि भुजङ्गैरसहिष्णुः ।
बभ्रामोच्चैः सस्मितसेनाजनदृष्टः स्कन्धावारं व्याकुलफूत्कारविरावः ॥ २१ ॥
सन्धौ सिन्धोः सेतुसमासक्तकपीन्द्रव्यस्तक्षुभ्यत्क्ष्माधरलीलां तुलयद्भिः ।
कासाराणां साररसानामवगाढुं गाढं क्रान्तैर्वारि महेभैरवतेरे ॥ २२ ॥
आलिङ्गन्ती स्फारितया पुष्करकोटचा प्राणालं श्रीप्रस्तुततोयस्रुतिचक्रम्* ।
हस्तैरम्भःपूरणपीनैरथ घट्टेषूत्तामासुः कुत्तिमिभाः फूत्कृतसारैः ॥ २३ ॥
स्फारं स्फारं प्रस्फुरतीं पल्वलपाने तर्षोत्कर्षात्ताररतरां कृष्टनिविष्टाम् ।
अन्तर्नासं सन्ततिमातां शफरीणां त्रस्तः द्योभान्मङ्क्षु निरष्ठीवदिभोऽग्रे ॥ २४ ॥
जिघ्रन्नम्भःसंभृतवन्यद्विपगन्धक्रूरक्रोधोद्बोधचलत्कुञ्जकवाटः ।
खेदोदश्चत्सेचकमास्फालितहस्तस्तीरे तन्वन्नास्थित नादं गजराजः ॥ २५ ॥
मातङ्गानां व्याकुलवारिब्रुडितानामत्युत्तुङ्गाः पिङ्गरुचः पुष्करदण्डाः ।
सूत्कारारम्भःकेसरसाराः सरसीषु प्रापुः प्रौढोत्फुल्लितताम्रोत्पललीलाम् ॥ २६ ॥
तोये मग्नस्योद्गलमालोल्बणसीधोः पीलोः पीनाभोगभृतः कुम्भयुगेन ।
कावेरी या तत्क्षणमालक्ष्यत मृष्टाभ्युद्गतचारूच्चकुचेव* ॥ २७ ॥
उद्धूयोच्चैः साचिकराग्रोद्गलनाभिः पूलं पीलुः पल्वलघासस्य जघास ।
अद्रिद्रोणीगह्वरगम्भीरगलाग्रश्वभ्रादभ्रान्तविसारोद्गतगर्जम् ॥ २८ ॥

---

19a, M3 जवा for नवा
d, M3 रोमाञ्च for रोमाञ्चित in M
20,21, Missing in M3
23b, M3 श्रित for स्रुति
c, M3 पानैः for पीनैः
24c, M नाशं for नासं in M3.
25d, M3 तीर्थं नापतनोदद्विजराजः
26b, M खण्डाः for दण्डाः
27, Missing in M3.

जिघ्रन्तः क्ष्मामस्तपरिष्कारखलीनाः खेलोदञ्चद्बालधयः स्वेदसमुन्नाः ।
मन्दं मन्दं मान्दुरिकैर्गायनसक्तैः बिल्वं व्यामायाममकृष्यन्त तुरङ्गाः ॥ २९ ॥
उत्थाय श्रीवृत्तकलक्ष्मीपरिवृत्तश्चक्रे नातिच्छेदमुखस्फारितघोणः ।
देहोद्धातं क्रूरखुरन्यासनिमग्नक्ष्मापीठोद्यत्पादसमुद्गाधिकमुद्रम् ॥ ३० ॥
प्रौढप्रोथग्रन्थिगुणाच्छिन्नखलीनैरश्वारूढा रक्तिभिरारादवतेरुः ।
मुद्राहाराः स्नातुमुदञ्च ⏑⏑ — — पद्धमानत्रासचलाच्चं सरसीषु ॥ ३१ ॥
आप्लुत्योच्चैः सिन्धुषु सन्तेरुरथाश्वाः चोभाश्लिष्यत्संकुलशैवालसरोजैः ।
आसिञ्चन्तस्तीरतटोर्वीरिनपोढक्रीडालोलालङ्कृतिखण्डैरिव गात्रैः ॥ ३२ ॥
चेरुर्द्रोणीः कोटरकीर्णान् यवसौधान् उद्दामा............रवन्धुरितांसाः* ।
.........प्तपरावृत्तविसर्पानाकारास्तासक्तशकृन्मक्षिकमश्वः ॥ ३३ ॥
त्रासायासं पत्ति* कुतोऽप्यन्यतरेश्वे संरम्भेणोदस्तसमस्तत्रिककूटाः ।
अश्वश्रेणीष्वत्र विविष्टित समंसारु... ...न्धरवाधाम्नि चचाल* ॥ ३४ ॥
तीर्णः कीर्णं कर्णसुखास्यध्वनिघासं ग्रीवां चञ्चत्काञ्चनसंन्यासमुदस्य ।
औज्झीदश्वो निःश्वसितं फूत्कृतवातोदस्तायस्तप्रोथपुटोत्थप्रतिनादम् ॥ ३५ ॥
युद्धाविद्धोद्धूतकुटीकुक्कुटकूटं प्रेङ्खत्आज्यव्राजिकजीर्णोर्जितपत्ति ।
कूजत्कीरं लोललल्लावकलीलं चक्रुर्नर्मक्रीडनकं राजयुवानः ॥ ३६ ॥
दृष्टौ दृष्टाः सोऽकृत कान्त्या कमनीयो ऽमन्दानन्दा नैव नृपानीकनिवेशः* ।
तत्सौन्दर्यं साधुगुणाविष्टमदीनं तृप्यन्त्युच्चैर्येन न चक्षूंषि जनानाम् ॥ ३७ ॥

विद्याधरा विदधतः कटकस्य सेवां
सत्कारिणीं न खलु ते ततृपुस्तदानीम् ।
सारः सतां सततमेष सुजन्मलाभो
यत्सत्क्रियां प्रकटयन्ति गृहागतानाम् ॥ ३८ ॥

---

30a,M. लक्ष्मा for लक्ष्मी in M3
31c,M शाषपाली for the lacuna.
33,34, Missing in M3.
37c,M3 गुणाकृष्टमतीनाम् for गुणाविष्टमदीनं
d,M च for न

क्षितिपतिपरिभोगं क्ष्माधरो लक्ष्म लक्ष्म्याः
स्थिरगुरुगुणपक्षारक्षमक्षुण्णमाप्य ।
अकृपण इव दाता श्रीफलैरापुपूरे
स शिबिरशिवदीक्षादक्षिणो दक्षिणाशाम् ॥ ३९ ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये शिबिरसंनिवेशो
नाम सप्तमः सर्गः ॥

---

## अष्टमः सर्गः

अथ समं क्षितिपालमनोमुदे खचरसिद्धिवशाद्विविशुः श्रियम् ।
मधुमदध्वनितालिमनोरमद्रुमलये मलये सकलर्तवः ॥ १ ॥
कुसुमतानमता नवमञ्जरी प्रमदलाभदलाभरणाद्रुमम् ।
अमृशदस्तशदस्तवकापदं मधुमलं विमलं वकुलं नृपः ॥ २ ॥
विशदशीकरशीतलशालिषु प्रकृतिराकृतिनिर्झरवारिषु ।
रभसयन् सुरभौ नृपमाधवौ मतमरुद्धमरुद्धसुखोदयः ॥ ३ ॥
अभिमतेन विलीय निरन्तरं मधुकरेण परं परिचुम्बिता ।
रुचिररागरसस्व...... कोविकोसनमञ्जरी* ॥ ४ ॥
अधिगतं परिरम्भसुखामृतं श्रुतिपुषः पपुषा सुरभिश्रियः ।
कुरवकेन निरन्तरमाददे ललिततोलिततोलितवल्लिना* ॥ ५ ॥
प्रणयिनीमवलम्ब्य रसोन्मुखीं मधुरहासवतीं कुसुमश्रियम् ।
विलसितुं सहकारमहीं मधुर्निविविशे विविशेषपरिष्कृताम् ॥ ६ ॥
स्थिरधृतिर्नियमेन वनाश्रितः कमपि मन्त्रमयं मधुपोऽजपत् ।
अभिचरन्निव पान्थविलासिनीर्निरवमो रवमोहितमानसः ॥ ७ ॥

---

4,M3 omits.
5d,M3 दलिततालिततानितवल्लिना
6a,M3 अवलोक्य for अवलम्ब्य
7a,M श्रियः for श्रितः
d,M नरवमो for निरवमो

द्विजगणः समुपेत्य वनस्थलीः परिचचार समुज्ज्वलकिंशुकाः ।
सदहना मधुना मकरध्वजाऽध्वरचिता रचिता इव वेदिकाः ॥ ८ ॥
समुदिते सुरभौ पथिकाः पथि स्थिरधृति व्यतिचुक्षुभिरे क्षणात् ।
शशभृतीव समीयुषि सिन्धवो वितिमिरे तिमिरेचितवीचयः ॥ ९ ॥
वकुलमाकुलितालिपटं मधावधिशिरःस्तबकेन जनोऽत्यवैत् ।
ध्वजमिवात्मभुवो भुवि भासुरं समकरं मकरन्दविलासिना ॥ १० ॥
जगति यामतनोर्जयघोषणां जगदुरन्यभृतो व्यपदेशतः ।
सरति सौरभसाक्षिणि दक्षिणे मरुति सारुतिसारमवर्णयत् ॥ ११ ॥
विरचितं* दधती विकरालतां मकरकेतुकिरातसमीरिता ।
क्क मधुमासि निराकृतकामिनीजनशशा न शशाक शराशनिः ॥ १२ ॥
मधुरमाधवरञ्जितमञ्जरीकृतपरिष्कृति केसरकाननम् ।
सुतलतामकरन्दकणच्छटासिकतिलं कति लङ्घयितुं क्षमाः ॥ १३ ॥
अतनुकेतनयष्टिरनुच्चकैः प्रविकचा सहकारतरोर्लता ।
क्षितिमवक्षतिभिर्नवकेशरैरलिपताऽलिपताकिकयोज्ज्वला ॥ १४ ॥
प्रसवशालिविषालिरवाकुला *रतिवशा च रसादपराङ्मुखी ।
ऋतुवरेऽनवरे नवमालिका विगतमानतमा नतिमागता ॥ १५ ॥
शुचिसमृद्धिरुदञ्चितमल्लिका प्रहसितं मुखमादधती गिरेः ।
अभितरन्तु* वराङ्गभुवि द्युतिं पुलकजालकजाततनुघर्ममुक् ॥ १६ ॥
रतिगृहे समदस्मरकुञ्जरश्रवणतालविलासमुपेयुषी ।
द्युतिमधत्त जवानिलजीवितक्कमितभव्यजनव्यजनावली ॥ १७ ॥
तपति तीव्रतरं तरणौ तथा व्यधित चन्द्रकचक्रमसौ ततम् ।
नहि यथा परितापकरी रवेः करकलापि कलापिनमाविशत् ॥ १८ ॥

---

11d,M3 मारमदर्शयत् for सारमवर्णयत् in M. and मारुति for सारुति
12a,M3 अविरतं for विरचितं
c,M मास for मासि
d,M शराशनः for शराशनिः
15d,M3 मानता for मागता
16,17, Not found in M3.
18d,M3 आविशेत् for आविशत

विषमधर्मदिनोष्मकृतक्लमं क्षणमिवोक्षितुमर्यममण्डलम् ।
भुवि निपत्य जवाज्जगृहुर्जलं रविकरा विकरालतरत्विषः ॥ १९ ॥
चलदलोद्दलितामलमल्लिकापरिमलाकुलितातिकुलाकुलः ।
अकृत सैन्यमिवोर्जयितुं मरुन् मलयजालयजालकलालनाम् ॥ २० ॥
बलपरिग्रहपूर्णमनोरथा न गणयन्ति हि काममपि दुःस्थितिम् ।
यदवहन् सुदृशो न शुचौ क्लमं प्रियसहायसहावसमागमाः ॥ २१ ॥
रविरुचिज्वलितं परिसर्पतोश्चरणयोर्मणिकुट्टिममङ्गणम् ।
किणकिणैः सुदृशोऽरुणताऽभवत् स्नापितयापितयावकयोरपि ॥ २२ ॥
दिवसमानसमानमितत्त्वपो मुखरभानुरभानुगखेटकः ।
रविरुचा तरुचातकमत्यगे शुचिरभूदरभूदवकृच्च सः॥ ॥ २३ ॥
विदधदम्बुमुचः पथिकाङ्गनाविनिहितान्तकपाशभयंकरान् ।
व्यधित शैलमखण्डशिखण्डिनीकुलमुदेऽलमुदेत्य घनागमः ॥ २४ ॥
गुरुनिदाघजघोरघनातपक्लमजुषां ककुभामतिशीतला ।
घनपटी परिरभ्य जलार्द्रिका समतताऽमततापतिरस्क्रियाम् ॥ २५ ॥
वहति केकिनटे रुचिरं चिरं दलितचन्द्रकमण्डलताण्डवम् ।
स्फुटमिवाम्बुमुचां मुमुचे ततिर्जवनिकाऽवनिकान्तिकृता तता ॥ २६ ॥
प्रियतमादभविष्यत चेत् पृथक् तदचिरादमरिष्यत निश्चितम् ।
घनघनोर्जितगर्जितसंभ्रमा ममदिरेमदिरेक्षणया क्षणे॥ ॥ २७ ॥
ध्रुवमिवाशु निपीय सहाम्बुना निबिडडम्बरमम्बुधिगर्जितम् ।
विदधतः प्रथिमानमुदारदिग्व्रजगुरुं जगुरुन्नतमम्बुदाः ॥ २८ ॥
प्रियकपिङ्गरुचो हरिगोपिका द्युतिमधुर्विधुराध्वगसंहतेः ।
स्फुटितचित्रभुवां भुवि कर्दमोद्गमसृजामसृजामिव बिन्दवः ॥ २९ ॥

---

20a,M3 वलिता for द्दलिता
21,M3 omits.
24c,M3 for वितत व्यधित
25c,M3 has घनपटीं & जलाद्रिकां
d,M मत for मित in M
28d, Readings in M are very corrupt. those in M3 are given.

गुणमयोऽपि सदोष इव क्वचिद् भवति यत्कमलाकरसारसाः ।
समुदयेऽम्बुमुचामभवन् जगत्क्रमनुदामनुदारमनोमुदः ॥ ३० ॥
अचलश्रृङ्गजुषस्तडितो दधुस्तरलिता रसना इव ये घनाः ।
उडुकदम्बककोकनदे नभःसरसि तैरसितैर्महिषायितम् ॥ ३१ ॥
कुटजकुड्मलकोमलमालतीमलिनसान्द्रशिलीन्ध्रसुगन्धिना ।
अधिजगे मरुताध्वगमण्डलीगमरुधामरुधास्य ˘–˘– *॥ ३२ ॥
वरवधूरवधूय यदास्यते परमहो महती बत मूढता ।
जलधरैरिति रम्यबकावलीदशनकैः शनकैर्जहसे जनः ॥ ३३ ॥
स्फुटमिवाम्बुदवारिपिपासिता परमपामुपदंशविधित्सया ।
ध्वनिभिरुद्धतमध्वगजीवितं विशकुलाश कुलायवतां ततिः *॥ ३४ ॥
मृतिमुपैषि पुरा रुषमेषि चेद् दिवमिवाभिहिता कृततर्जनम् ।
स्तनवती स्तनता स्तनयित्नुना पदमसादमसावकरोत्प्रिये ॥ ३५ ॥
नवकदम्बकदम्बकसन्ततप्रसवनीयवनीयकषट्पदः ।
अकृत तोयततो यशसे नगो भुवि भुजङ्गभुजङ्गलितापदम् ॥ ३६ ॥
स्फुटतया भुवि बिभ्रति यत्र ते हलधराङ्गरुचं कुमुदाकराः ।
स समुदैत् क्रमसंगलितक्वणत्कतिपयातिपया जलदात्ययः ॥ ३७ ॥
स्थगयितुं समवाहि न मण्डलं दिनपतेर्जलदैर्जलकालवत् ।
क्व महतां सुचिरं क्रियते द्युतिर्विकलिता कलितापकरैः खलैः ॥ ३८ ॥
भुवि ववे पवनैर्वनडम्बरग्लपितदिक्तरुणीश्वसितोपमैः ।
कमलिनीमकरन्दसमुल्लसत्सुरभिकैरभिकैरवकाननम् ॥ ३९ ॥
शरदतौ विकटांसतटाटवीस्फुटसटास्फुटसुन्दरतां हरेः ।
क्षितितलं परिपाकसमुच्चलत्कलमचूलमचूचुरदुच्चकैः ॥ ४० ॥

31a, M3 अतुल्तुङ्गजुषः for अचलश्रृङ्गजुषः
32–34, M3 omits. d is not clear in M.
32, M is not clear in d for the lacuna. It has सिषेविता
39a, M3 प्रतिवनो for भुवि ववे
b, M वत्करुणा for दिक्तरुणी
40a, M3 तटोत्कटे for तटाटवी
b, M3 तट for सटा
c, M3 समुल्लसत् for समुच्चलत्

गतघनापदमाप्य धृतोदयं सपदि चन्द्रमखण्डितमण्डलम् ।
अकलुषत्वमलम्बितमां तमोदलनलालनलासिजलैरपि ॥ ४१ ॥
प्रववृते परितः परिचुम्बितुं कुमुदकाननमुन्मुखरागवत् ।
शिशिररश्मिमुखेन शरत्प्रिया विलसदंशुसदंशुकशोभिना ॥ ४२ ॥
अघटयन्मदनस्य सरोगृहे शरदसावभिषेकमहोत्सवम् ।
रुचिररुच्यसितैरिव सारसैः सकलशे कलशेवलमालिके ॥ ४३ ॥
शुकततिः श्रुतपालिवधूलसल्ललिततालचलद्वलयस्वना ।
चकितमभ्यचरत् कपिशङ्किनी दशदिशः शदिशन्त*महीतला ॥ ४४ ॥
गिरिगुरुश्रुतिशालिमहोदयः कृतिसमाज इवाप्रतिभावताम् ।
अपजहार चिरस्य शिखण्डिनां ध्वनिबलानि बलाहकसंचयः ॥ ४५ ॥
विदलिते सपदि प्रतिबन्धके रविरदीपितरां घनमण्डले ।
क इव वा न धृतप्रचये रिपौ नवहते वहते द्युतिमुज्ज्वलाम् ॥ ४६ ॥
अतिचलज्जलदोत्थमुपप्लवं सरभसं परितः परिषष्वजे ।
प्रियसखीव शुचिस्मितशोभिनी सुकुमुदा कुमुदारफलां शरत् ॥ ४७ ॥
मदनकेतनकेतकिनी शरच्छिदुरसादरसादभितोऽकरोत् ।
स्थलगता जगतो जलगास्तथा सरजसारजसा द्विविधाः श्रियः ॥ ४८ ॥
भवति यत्र परस्परभागिनी मृगदृशां स्तनमण्डलसोष्मता ।
स समयः समयादथ हैमनो जनवशी नवशीतसमीरणः ॥ ४९ ॥
अमितमभ्यसितुं शरदत्ययः शशधरादिव शीतलताश्रियम् ।
रभसयन्दयिताङ्कधृतं वधूजनमदीनमदीर्घयत क्षपाः ॥ ५० ॥
हिमसमीररणद्दशनाः शनैः सुभगशीत्कृतशैत्यधुताधराः ।
प्रणयिनां सुदृशः सहसाऽपतन्नुरसि तारसितानुपमस्मिताः ॥ ५१ ॥

---

41,42,44,M3 omits.
46a,M3 विगलिते for विदलिते
49a,M3 परस्परभाषिणी for परस्परभागिनी
50,M3 omits.

मधुलिहः प्रविलोक्य हिमाहतां परिचितामपि पङ्कजिनीं जहुः ।
क्व सुचिरं क्रियते मलिनात्मभिर्ध्रुवतरा बत रागमयी मतिः ॥ ५२ ॥
विदधती हिममारुतधुक्षितस्मरकृशानुविकीर्णकणाकृतिम् ।
नवनमेरुफलावलिराबभौ सुकपिशा कपिशावसुखादपि ॥ ५३ ॥
विशकलं सकलं सुरतार्णवं पृथुतरं तु तरन्तु जना इति ।
निजजनी रजनीरभिवर्धयन्नृतुरहानिरहानि तनून्यधात् ॥ ५४ ॥
श्रितमभीष्टविशाखसुखार्द्रतां हिमरजःप्रसरैरतिभैरवम् ।
धवलयन् गगनं धृतकृत्तिकं शशिशिरः शिशिरः प्रमथोऽभवत् ॥ ५५ ॥
प्रणयिनां निबिडैरिव पिण्डकैरधिमनो ज्वलतः स्मरतेजसः ।
मुमुषुरेणदृशस्तुहिनव्यथामसुतरां सुतरां स्तनमण्डलैः ॥ ५६ ॥
व्यधित यां हिमचन्दनमण्डितामवनतो रसिकः शिशिरः स्वयम् ।
विशदकुन्दनिभात्प्रमदोदयाद् विहसतीह सतीव मही स सा ॥ ५७ ॥
तुहिनवातनवातविभ्रमा सुभगता सुगता सुखदायिनी ।
अतिवरा विवराविद्युता जहौ सफलिनीरलिनी रसताहता ॥ ५८ ॥

भृङ्गा विनाशमभवत्सरसां हिमेन
कम्पे तुषारमरुति स्वरसन्निभासः ।
तीरेषु चावहत वाति कृताध्वनीन-
कम्पे तुषारमरुति स्वरसन्निभासः* ॥ ५९ ॥
इत्यद्रावादधे श्रीर्ऋतुभिरपतितं संगता वल्गुवल्ली-
लेखे सुप्तालिमग्रा सरलदलरसग्रामलिप्तासुखेले ।

---

54d,N begins with धात् the last word.
d,M3 तनु व्यधात् for तनून्यधात्
56,M3 omits.

58c,M3 विहृता for वियुता, M3 अविवरा for अतिवरा
d,M3 सफलिनीरलिनीरसता कुतः

सेना रम्येऽथ रेमे श्रितशिवशिखरा तत्र सेव्यानुपात्तान्
सारे मत्वा समस्तानमतधुतमनस्तामसत्वामरेसा ॥ ६० ॥
(युग्मपादप्रतिलोमः)

इति श्रीकप्फिणाभ्युदये महाकाव्ये सर्वर्तुवर्णनो नामाष्टमः सर्गः

---

60a, M3 वन्य for वल्गु b, M3 स for ऽथ

## नवमः सर्गः ।

अथात्यये गगनविहारभूभुजां गिरं गिरावृतुगणबन्धबन्धुरे ।
महीपतिः कुसुमचिचीषया चिरं वनावनीं व्यहृत वधूभिरावृतः ॥ १ ॥
नृपे विशत्युपवनमन्मथाहवं तदाज्ञया पुलककरालकङ्कटाः ।
दधुस्तदा तदनुचरैः समुद्यता मनोभवप्रहरणमालिकाः स्त्रियः ॥ २ ॥
अहो सखे कृतमतिसाधु काननं स्वलाञ्छनैर्नवकमनीयकान्तिभिः ।
स्मरः सुखादिदमिव मित्रमभ्यधाद् मधुं वधूजघनविभूषणारवैः ॥ ३ ॥
मृगीदृशां प्रसवचिचीषयोच्चकैर्लतान्तरप्रहितदृशां समुत्सुकम् ।
पथि स्खलच्चरणसरोजजा रुजा ददौ दशां सुविशदसीत्कृतां मुखे ॥ ४ ॥
अलक्तकच्छुरिततलैः पुनः पुनः समुल्लसत्कमलपलाशकोमलैः ।
वधूपदैः शिरसि रसेन ताडितं तदङ्गणं सपदि सरागतामगात् ॥ ५ ॥
समं गतावभिमतपार्श्वमीलने निरन्तरे परिणतघर्मबिन्दुना ।
व्ययोज्यत प्रखरनखव्रणार्तिना क्षणं प्रियात्कुचकलशेन कामिनी ॥ ६ ॥

---

1a,NM3 विहारभुग्भुवां; M3 विहारि for विहार
d,N अवनि for अवनीं; M3 व्यक्त for व्यहृत; आवृतं for आवृतः
2a,M3 अथवन for उपवन
d,M3 मालिकां
3,M3 मुक्तवान् for मभ्यधात्
cd,M3 स्मर and मधुः for स्मरः and मधुं
6a,M समागतावभिमत M3 समागतामभिमत
c,M3 व्ययोध्यत and व्रणाक्तिना
d,M3 प्रिया for प्रियात्

नताननना रजसि विराजिलक्षणां निरीक्षितुं प्रियचरणाङ्कपद्धतिम् ।
दधे गतिं कृतकृतकाध्वविक्लवा सुमन्थरां सुपरिचितत्रपाऽपरा ॥ ७ ॥
जडक्रमा चतुरविहारकाम्यया समाश्रिता दयितकरावलम्बनम् ।
सुखोदयश्लथचलनीविबन्धना वधूरथाधिकतरमन्थरं ययौ ॥ ८ ॥
असन्नतिं पृथुलनितम्बमण्डलीभरानमद्युवतिभुजावलम्बने ।
उपेयुषी सपदि बभार कामिनः समुन्नतिं सफलतरां शिरोधरा ॥ ९ ॥
परस्परार्पितभुजगूढपार्श्वयोस्तथाऽभवत् समगमनं विलासिनोः ।
अगात्प्रियाघटिततनुर्यथानयोरुमापतिः सुबहुगुणोपमास्पदम् ॥ १० ॥
उपेत्य नो नवमृदुपल्लवावलीविलोपनैरलमलमेणलोचनाः ।
इतीव संव्यदधत वातविप्लुतैर्निवारणं किसलयपाणिभिर्द्रुमाः ॥ ११ ॥
समुन्मिषन्मुकुलकुलार्जितैरलीन् स्वसौरभैश्चिरमुपकृत्य निर्वृतान् ।
मरुद्वधूपरिमलमार्गमानयत् सतां मनः स्वपरसुखोपकारकृत् ॥ १२ ॥
शिखाग्रहादभिमुखमापुरानतिं नखक्षतिं मृदुषु दलेषु सेहिरे ।
द्रुमाः परं बभुरुपभुक्तमण्डनाः क नाभवन्नलिनदृशः प्रदक्षिणाः ॥ १३ ॥
उपागतेष्वभिमततां रताहवे निरन्तरं विटपिषु वारयोषिताम् ।
सुकेशरैः कुपितकषायकान्तिभिर्विलोचनैरिव कुसुमैर्लता बभुः ॥ १४ ॥
विकासिषु व्रततिभुजेषु सङ्गतां रतार्थिनीं रमयितुमङ्गनां नगः ।
युतस्तया कुसुमचयैर्निपातिभिः सितांशुकावरणमिवाभितो व्यधात् ॥१५॥
त्विषानया करकमलस्य खण्डिते दधासि किं मयि पुनरुक्तखण्डनाम् ।
समालपन्मधुरमधुव्रतारवैर्मृगेक्षणामिदमिव बालपल्लवः ॥ १६ ॥

---

7, M omits 7 cd and 8
10d,M सुबल for सुबहु; M रमा for रुमा
c,M3 निह्नुतैः for विप्लुतैः
11d,M3 निवारणाम् for निवारणम्
12d,N स्वपद for स्वपर
13a,M3 omits; N मीयुः for मापुः
b,N नखक्षतिं मृदुषु दलेषु सेहिरे M has क्षतिः and तलेषु
14a,M तपागमेषु for उपागतेषु
c,M स for सु with केशरैः
15,M3 omits.

नखावलीमभिदयितं लताग्रहग्रहोद्यतस्थिरभुजमूललक्षिताम् ।
सखी मितस्मितवृतविभ्रमं भ्रुवा विलोलया नवयुवतेरदर्शयत् ॥ १७ ॥
समेतया कुसुमचयार्थमन्यया स्तनाहतेस्तरुणतरुस्तरङ्गितः ।
ध्रुवं मुहुः कुचपरिरम्भलोलुपो न लोलतामशिथिलयत्स मानतः ॥ १८ ॥
धृतस्पृहं विटपवतीविकस्वरस्फुटश्रियं नमयितुमग्रवल्लरीम् ।
समुल्लसत्सुललितबाहुकन्दलीतरङ्गितांशुकसुखलक्ष्यविग्रहा ॥ १९ ॥
कलाकुलालिकुलविलोलमञ्जरीरजःकणव्यतिकरकूणितेक्षणा ।
प्रियं पुरः स्थितमपि वीक्षणोत्सुकं व्यलोकयन्न खलु विदग्धनायिका ॥२०॥
(युग्मकम्)
उपेयुषः सुहृदि विलासलेखतां करस्थितौ विटपदलस्य सुभ्रुवः ।
दधेऽधिकं प्रसृततरेण सङ्गिना नखांशुना नियमनतन्तुविभ्रमः ॥ २१ ॥
निबध्नती शिरसि नतस्य कामिनः स्रजं वधूस्तनतटलीनतन्मुखा ।
त्रुटद्गुणग्रथनविलम्बकैतवात् समन्वभूत् कुचयुगचुम्बनं चिरम् ॥ २२ ॥
प्रतिस्त्रियं स्वजयति वल्लभे वधूरनीक्षणं कुसुमचयाकुलाकुलः ।
व्यधत्त यच्च्युतकुसुमः सवेपथुः फलोज्झितं तदकृत पाणिपल्लवः ॥ २३ ॥
तथा लतालुलितमधुव्रताकुला विलासिनी विगलितमाननं व्यधात् ।
उपान्तगाभिमतकपोलमण्डले यथोच्चकैरविकलमाप चुम्बनम् ॥ २४ ॥
नतभ्रुवः कुसुमरजोविरूषितं त्वमीक्षणं सुखय मुखानिलैरिति ।
चुचुम्बिषौ नवयुवतेः प्रिये मुखं तदन्तिकं निपुणसखी निनाय ताम् ॥ २५ ॥
नवोढया दृढदयितक्षतोष्ठया यदार्तिजं विरुतमतानि मौग्ध्यतः ।
प्रबोधितव्रततिगतालिनिस्वनः सखीजनस्तदलमलक्षितं व्यधात् ॥ २६ ॥

---

17a,M नग for नख
b,M लक्षणम् for लक्षिताम्
21b,M विटमदनस्य for विटप दलस्य
b,M has करस्थिते; N करस्थितै for which करस्थितौ is suggested.
24c,N उपान्तिगो, it may be read उपान्तगा
25a,M3 विभूषितं for विरूषितं
26,M3 omits; b,M सौख्यतः for मौग्ध्यतः

विलासिना सपदि विपक्षसंनिधौ सुशर्मदं श्रवणवतंसगोचरे ।
यदद्भुतं कुसुममपि प्रकल्पितं महाफलं तदभवदानतभ्रुवः ॥ २७ ॥
समीयुषोः कमपि रसं विलासिनोः सखीजनो नववनराजिपञ्जरे ।
अनीनमत्कुसुमचयापदेशतो लता लतागृहगहनत्वकाम्यया ॥ २८ ॥
समत्सरं निहितदृशं प्रतिस्त्रिया नखावलीवलयि नितम्बमण्डले ।
अदुर्ग्रहे तरुकुसुमेऽप्युदीरितां सुमध्यमा न नमयति स्म दोर्लताम् ॥ २९ ॥
समाहतः कुसुमदलैरवद्यवान् नियन्त्रितो नवबिसनालतन्तुभिः ।
इयत्यपि स्फुटमभिगत्य निग्रहे प्रियः कथंचन समियाय सुभ्रुवः ॥ ३० ॥
निवासयत्युरसि विलासशेखरं रतेश्वरं गदितविपक्षनामनि ।
मनस्विनी न परुषमामृषद्वचः सखीषु तु व्यधित दृशं पयःप्लुताम् ॥ ३१ ॥
वधूर्गुरोः प्रतिलसनाविलोकने वतंसकान्निहितवतः स्तनावधौ ।
तया धृतं यदभृत तन्मयं मनो बभूव तत्फलगुरु पारितोषिकम् ॥ ३२ ॥
सवेपथुः स्वपदयुगासनीकृतस्थिरस्थितिप्रियतमपादपद्मया ।
लतान्यया निबिडनितम्बमण्डलस्तनेरितप्रणयि तरोः समाददे ॥ ३३ ॥
श्रुतेः पदं व्रजति नवोत्पले रुचिं तदाश्रयां तरलदृशो विलोचनम् ।
स्वशोचिषाऽहरत समत्वमानिनां समुन्नतिं न दधति दीर्घदर्शिनः ॥ ३४ ॥
तनुत्विषो गुणगणशालिनः पुरः क्षमा स्थितिर्न सुतनुलोचनस्य ते ।
श्रुतिस्पृशः सितनलिनस्य षट्पदः क्वणन्निति व्यधित विगर्हणामिव ॥ ३५ ॥
पुरन्ध्रिभिर्विटपिषु लुप्तमञ्जरीसकेशरप्रतिनवगुच्छपङ्क्तिषु ।
पराङ्मुखैर्न पुनरसज्जि षट्पदैः स्पृशन्ति वा कृशविभवं कमर्थिनः ॥ ३६ ॥

---

27d,N महत्फलं for महाफलं
28d,M लताग्रह for लतागृह
29a,M3 विहित for निहित
b,M वलयिनि मूलमण्डले
b,M जाल for नाल
30a,N समाहितः for समाहतः
d,N वास for सम्
31a,N निवेशयत्युरसि; M3 शेखरे
33d,M सने for स्तने
c,M लतालया for लतान्यया
34b,M3 विडम्बनां for विलोचनम्
c,M स्वशोचिषां हरति for स्वशोचिषाऽहरत
d,N ददति for दधति
36c,M निपुणरसज्ञ for न पुनरसज्जि

रतं दधत्तिलकपदे कृतास्पदः कपोलयोश्चिरमथ चुम्बितस्तनः ।
धृतायतिर्वपुरभितोऽभिषस्वजे नतभ्रुवां सलिलभरो निदाघजः ॥ ३७ ॥
मृगीदृशां रुचिरकचाञ्चितैरपि स्मितोदयादतिविकचत्वमागतैः ।
सुगन्धिभिः सदलकतामपि श्रितैर्दधे मुखैरसदलकत्वमग्रतः ॥ ३८ ॥
मनस्विनीमुखकमलेषु सालसां दृशोः स्थितिं परमुपदिश्य वल्लभैः ।
अथादधे पुलकपयोभिरन्वयस्तदीक्षणव्यसनिषु नायकेष्वपि ॥ ३९ ॥

विपुलपुलकपूरव्याजतः स्नानदूत्य-
प्रहितनिजजलास्ताः सुभ्रुवो वल्लभाढ्याः ।
श्रमसमुदयमन्दाः स्यन्दिनीं मङ्क्षुमीयुः
शुचिशिवशिशिराम्भःशीकरालीकरालाम् ॥ ४० ॥

इति श्रीकम्फिणाभ्युदये महाकाव्ये कुसुमावचयो
नाम नवमः सर्गः ।

---

37a,M3 omits. N Shows lacuna for रतं दधत्

38b,M विकरत्व for विकचत्व; M3 विकलत्व c,M3 सद्लिकता; d,M3 सद्लिकत्व

39a,M3 omits. a,N नितम्बिनी for मनस्विनी b,M3 जलान्ता:, N जलार्ता: for जलास्ता:

40a,M3 स्नातभूय for स्नानदूत्य

# दशमः सर्गः

अथ वनगहनान्निरीय पृथ्वीतलबिलनिर्गतनागनायिकाभाः ।
अभिनदि दिनकृत्करालतापक्लमवशमन्थरमन्थरं ययुस्ताः ॥ १ ॥
पथि पृथुलनितम्बबिम्बचुम्बिस्खलितविशृङ्खलमेखलाकलापाः ।
कलितकलकलाकुला बभुस्ताः प्रविसृततूर्यरवस्मरैकसेनाः ॥ २ ॥
अपि धृतनिभृताततातपत्रा विटपवतां पिबतां पथि प्रतापम् ।
प्रतिकृतिमजुषन्त जोषमेता भवति हि मार्गगतः कदा न सेव्यः ॥ ३ ॥
उचितखचितचारुलोलचूडामणिगणकान्तिकदम्बकेन काचित् ।
समतत सितमप्यथातपत्रं चिरमिव चन्द्रकसान्द्रचन्द्रकाङ्कम् ॥ ४ ॥
प्रियकरततमुत्तरीयमुच्चैः प्रतिवनितामभितः परं परस्याः ।
अतत न बहिरेव तापशान्तिं व्यधित मनोऽप्यतितीव्रतापवन्ध्यम् ॥ ५ ॥
भ्रमितमभिमुखं प्रियेण वध्वा व्यजनकमीक्षणगोचरे परस्याः ।
यदनिलमनलं तयोश्च योगात् सममवमत् तदभूच्चिराय चित्रम् ॥ ६ ॥
पुलककणकरालपाण्डुगण्डस्थलफलितस्फुरदातपत्रकान्तिः ।
सुतनुरतनुघोरघर्मशान्त्यै विनिहितचन्दनराजिकेव रेजे ॥ ७ ॥

---

1c,M3 अभिनव for अभिनदि
2a,M3 बिम्बभार for बिम्बचुम्बि
c,M ययुः for बभुः
3a,M भृत for धृत
b,M3 प्रयासं for प्रतापं
4b,M3 रोचिरुदञ्चितेन for कान्तिकदम्बकेन
5d,M3 विद्धम् for वन्ध्यम्
6c,M तदनिल for यदनिल

रचितशिखिविचित्रपत्रराशेरधिवसुधास्थितिमुष्णवारणस्य ।
प्रतिकृतिमविलक्षणां मृगाक्षी समतत नूपुररत्नरश्मिरागैः ॥ ८ ॥
घटयसि चटुलक्रमावलग्ने किमतितनीयसि तान्ततां श्लथत्वात् ।
इदमिव सुतनोर्जगौ गलन्ती मणिरशना पटुपादयोः पतित्वा ॥ ९ ॥
जडपरिचय एव दोषपोषी तिरयति नूनमपत्रपां प्रवृद्धः ।
युवतिगतिविनिर्जिता जहुर्यद् मृदुगतिगर्वपरिग्रहं न हंसः ॥ १० ॥
अथ तदवयवावमर्षलीलातरलतरङ्गकराग्रकम्पमम्भः ।
अविवररववाहि वाहिनीयं प्रसभमिवाह्वदविह्वलं महेलाः ॥ ११ ॥
अमलकमलकोमलाभिवेल्लत्परिमललालितलालसालिलोलः ।
मरुदतनुत मन्थरोर्मिमालः शुचिजलशीकरशीतलार्घमासाम् ॥ १२ ॥
कलयितुमिव कौतुकेन कान्ताः कुवलयदृष्टिकुलानि कूलवत्याः ।
वपुरविरलपक्ष्मलक्ष्मभाञ्जि द्रुततरविद्रुतनैद्रमुद्रमूहुः ॥ १३ ॥
मुखपतितपुरन्ध्रिसौरभोत्कैर्नलिनकुलेष्वलिभिः कुलायलीलाम् ।
कलयितुमलसत्वमाललम्बे भवति दृढा मधुपायिनां क्व वृत्तिः ॥ १४ ॥
अथ सरिदरविन्दवृन्दसर्पत्पुरुमकरन्दपरागरागतोऽभात् ।
घटयितुमभिषेकमङ्गनानां परिहितपिङ्गलमङ्गलाम्बरेव ॥ १५ ॥
युवतिषु सरितं सखीष्विवोच्चैश्चिरसमितासु समुत्सुकां समीक्ष्य ।
विकटतटनितम्बचुम्बनाय व्यधित न चक्रविहङ्गमः प्रसङ्गम् ॥ १६ ॥

---

9a,M3 क्रमावलम्बे for क्रमावलग्ने
b,M & N किमसि for किमति
c,N मणन्ती for गलन्ती
10,M3 omits
a,M एष for एव
11d,M सहेलाः for महेलाः
12b,N जालः for लोलः
d,M आर्चम् for अर्घम्
14b,M3 मुकुल for नलिन
c,N shows lacuna for कलयितु
15b,N पुरुमकरन्दपरागरागतोभात् ।
M गुरुमकरन्दपरागलोभलाभात्
M3 भोगलाभात् for लोभलाभात्
d,M3 मङ्गलपिङ्गलाम्बरेव
16,M3 omits.
b,M मसितासु for समितासु
d,N प्रसन्नम् for प्रसङ्गम्

श्रुतिमधुररथाङ्गनामनादस्मृतरससस्मरसीत्कृतस्वनानाम् ।
स्मितचलदधरं ससङ्ग दृष्टिर्मुखकमलेषु परस्परं प्रियाणाम् ॥ १७ ॥
सममनुभवितुं प्रियैर्विलासानपरिचितं परमार्थभीरवोऽपि ।
प्रसभमपभियः पयोऽभ्ययुस्ताः किमिव हि दुष्करमस्ति रागवृत्तेः ॥ १८ ॥
पयसि परिणता व्यधत्त वध्वाः प्रतिकृतिरुत्तटकोटिसङ्गतायाः ।
जलनिधिजलजालजायमानप्रतिनवविष्णुवधूवपुर्विलासम् ॥ १९ ॥
श्रवणकुवलयेन कोमलाङ्ग्याः पयसि परिप्लुतिमीयुषा चलोर्मौ ।
अधिगतनिजजन्मभूप्रभूतप्रमदवशादशनैरनृत्यतेव ॥ २० ॥
प्रतिनववनिता नितान्ततान्तेर्जलमवतीर्य ततस्तरङ्गभीरुः ।
अगलितमलगद् गले स्वभर्तुर्द्विषदपि कुत्रचिदावहेत्फलाग्र्यम् ॥ २१ ॥
प्रियकृतपरनामपूर्वसेका शिशिरजलैरथ मोहमाप कापि ।
तनुरपि विषमं तनोति तापं समुपचितप्रणयस्य खण्डनांशः ॥ २२ ॥
युवतिमुखसरोजलोलुभा मां बत नियमेन निरंशमुज्झति श्रीः ।
इति पयसि वधूनितम्बभिन्ने बिसकुसुमेन विषादिनेव मग्नं ॥ २३ ॥
गुरुमपि गुरुणा कृतां कृशाङ्गी न कमलकुड्मलमालिकां न दध्रे ।
जनयति हि किमप्यनल्पमोजो दृढतरभावकृतः प्रियप्रसादः ॥ २४ ॥
सरभसललनादृढावगूढैरतनुतरं समवाप्य रागमाभ्यः ।
वियुतिमिव पुरो विशङ्कमानैरविषहशक्तिमकम्पि वारिपूरैः ॥ २५ ॥
गिरितटविकटैर्नितम्बबिम्बैः प्रसरनिरोधमवाप्य वारि तासाम् ।
निरुपमतमरूपदृष्टिजातस्मयमिव रुद्धगति क्षणस्य तस्थौ ॥ २६ ॥

---

17a,M3 श्रुत for श्रुति
b,N सरसस्मर for रससस्मर
c,M ससर्जे for ससङ्ग
18,M3 omits.
19b,N उद्भट for उत्तट
20a,M प्रवल for श्रवण
21c,N अगलितमलमङ्गलेष्वभर्तुः
23b,M चिरं समुज्झति for निरंशमुज्झति
24b,M3 निदध्रे for न दध्रे
25b,N समवार्य for समवाप्य
25d,N रविषहशक्तिमकम्पि
M रवि सहसत् किम्
M3 रवि सहसा for रविषहशक्ति
26c,M नार्त for जात
d,M क्षणं स for क्षणस्य

सरिति मरकताश्मभासि दृश्या त्रुडिततनुर्विरराज गौरगात्री ।
कषदृषदि नवप्रमृष्टनिर्यन्महसि महारजतस्य राजिकेव ॥ २७ ॥
उदरभुवि तनूदरीरुदारं रुचिररुचीश्चिरमीक्षितुं चरन्तीः ।
अजनि जलमितस्ततो विसर्पच्छफरविवृत्तविलोचनप्रचारम् ॥ २८ ॥
ततततनुरनुदीर्घवारिमार्गप्रथिमपुरःप्रसरप्रवृत्तमग्रे ।
न्ययमयत निपत्य केशपाशस्तरलतरङ्गतुरङ्गमङ्गनायाः ॥ २९ ॥
विकचकचमशीर्णशैवलौघे परिमलितं नलिनोत्थरेणुरक्ते ।
पयसि पटु न निश्चिकाय कायं चलति चलावयवं युवा युवत्याः ॥ ३० ॥
उपरि परिगलद्भयं पतन्त्या प्रतततरङ्गभुजस्य वारिराशेः ।
अविदितपरिखेदया सखेदं रतिपरया पुरुषायितं कयापि ॥ ३१ ॥
प्रसभकरभरापनुन्ननीरप्रहतिकणत्कणकूणिताक्षिकोणा ।
असहत सहचारिणा सहैका स्मितरुचिशारितवारि वारिलीलाः ॥ ३२ ॥
स्तनजघनविमर्दमङ्गनानां सुकृतशतैरपि दुर्लभं तदाप्य ।
अदधत कलुषत्वमम्बुवेगो विगतविवेकमिदं हि तज्जडत्वम् ॥ ३३ ॥
स्रुतवसनपयःकणापदेशात् सुचिरमनुव्रजिता इवाम्बुभिस्ताः ।
(सपदि) तटगतप्रियात्तहस्ताः समुदतरन्समुदस्तरङ्गवत्याः ॥ ३४ ॥
परिहितपरिपाण्डुरोत्तरीया नवसलिलप्लुतिनिर्मलत्विषस्ताः ।
हिमपटलजुषामनीषदस्थु श्रियम ˘ – ˘ ˘ – ˘ – ˘ – – ॥ ३५ ॥
स्तनजघनसमागमच्युतानां विषमदशान्वयिनां वनं श्रितानाम् ।
युवतिभिरतिमात्रपीडितानां परमुदपादि विरागिताम्बराणाम् ॥ ३६ ॥

---

27,M3 omits.
b,M विचचार for विरराज
31d,N कयाचित् for कयापि
32b,M कुण्ठित for कूणित
d,M सीरित for शारित
d,N लीलाम् for लीलाः
33After this there is a confusion in the three MSS in regard to the division of stanzas due to the loss of lines at one stage on the other in the handing down of MSS.
34,35, M omits. The readings of N show that there were other stanzas after 33, but they are lost in M and are found in N as given here.
35,N breaks after श्रियम……

अभिकबरि विलासवासनायै पवनधुतः सुदृशां क्षणप्रणीतः ।
जयमिव विमृशन् कचैः स्वकान्तैः समसरदच्युत एव धूपधूमः ॥ ३७ ॥

प्रियकरमलनान्नितम्बिनीनां वपुषि मनोरमकाम्यकान्तिकान्ते ।
मुकुर इव मुहुर्मुहुः प्रमृष्टे प्रतिफलितं ददृशे वपुः स्मरस्य ॥ ३८ ॥

उन्मेषिभूषणरणज्झणनादवाद्य-
नृत्यत्स्तनार्पितमनोहरहारलेखाः ।
ऊहुर्विचित्रशुचिवर्णककाम्यभासः
स्मेरां श्रियं स्मरमहोत्सवभूमयस्ताः ॥ ३९ ॥

इत्याहिताविवरवारिकृताभिषेका-
स्ताः शीतमित्यथ सवेपथवो वदन्त्यः ।
यूनां परप्रणयशालिषु मानसेषु
प्राक् प्राविशंस्तदनु दोर्द्रुमपञ्जरेषु ॥ ४० ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये सलिलक्रीडावर्णनो
नाम दशमः सर्गः ।

---

37a,M3 अधि for अभि
d,M समरखक्षत for समसरदच्युत

38b,M गम्य for काम्य
In the colophon M3 has लीला for क्रीडा

सरिति मरकताश्मभासि दृश्या ब्रुडिततनुर्विरराज गौरगात्री ।
कषदृषदि नवप्रमृष्टनिर्यन्महसि महारजतस्य राजिकेव ॥ २७ ॥
उदरभुवि तनूदरीरुदारं रुचिररुचीश्चिरमीप्सितुं चरन्तीः ।
अजनि जलमितस्ततो विसर्पच्छफरविवृत्तविलोचनप्रचारम् ॥ २८ ॥
तततनुरनुदीर्घवारिमार्गप्रथिमपुरःप्रसरप्रवृत्तमग्रे ।
न्ययमयत निपत्य केशपाशस्तरलतरङ्गतुरङ्गमङ्गनायाः ॥ २९ ॥
विकचकचमशीर्णशैवलौघे परिमलितं नलिनोत्थरेणुरक्ते ।
पयसि पटु न निश्चिकाय कायं चलति चलावयवं युवा युवत्याः ॥ ३० ॥
उपरि परिगलद्द्वयं पतन्त्या प्रतततरङ्गभुजस्य वारिराशेः ।
अविदितपरिखेदया सखेदं रतिपरया पुरुषायितं कयापि ॥ ३१ ॥
प्रसभकरभरापनुन्ननीरप्रहतिकणत्कणकूणिताक्षिकोणा ।
असहत सहचारिणा सहैका स्मितरुचिशारितवारि वारिलीलाः ॥ ३२ ॥
स्तनजघनविमर्दमङ्गनानां सुकृतशतैरपि दुर्लभं तदाप्य ।
अदधत कलुषत्वमम्बुवेगो विगतविवेकमिदं हि तज्जडत्वम् ॥ ३३ ॥
स्रुतवसनपयःकणापदेशात् सुचिरमनुव्रजिता इवाम्बुभिस्ताः ।
(सपदि) तटगतप्रियात्तहस्ताः समुदतरन्समुदस्तरङ्गवत्याः ॥ ३४ ॥
परिहितपरिपाण्डुरोत्तरीया नवसलिलप्लुतिनिर्मलत्विषस्ताः ।
हिमपटलजुषामनीषदस्थु श्रियम ⏑ – ⏑ ⏑ – ⏑ – ⏑ – – ॥ ३५ ॥
स्तनजघनसमागमच्युतानां विषमदशान्वयिनां वनं श्रितानाम् ।
युवतिभिरतिमात्रपीडितानां परमुदपादि विरागिताम्बराणाम् ॥ ३६ ॥

---

27,M3 omits.
b,M विचचार for विरराज
31d,N कयाचित् for कयापि
32b,M कुण्ठित for कूणित
d,M सीरित for शारित
d,N लीलाम् for लीलाः
33 After this there is a confusion in the three MSS in regard to the division of stanzas due to the loss of lines at one stage on the other in the handing down of MSS.
34,35, M omits. The readings of N show that there were other stanzas after 33, but they are lost in M and are found in N as given here.
35,N breaks after श्रियम……

अभिकबरि विलासवासनायै पवनधुतः सुदृशां क्षणप्रणीतः ।
जयमिव विमृशन् कचैः स्वकान्तैः समसरदच्युत एव धूपधूमः ॥ ३७ ॥

प्रियकरमलनान्नितम्बिनीनां वपुषि मनोरमकाम्यकान्तिकान्ते ।
मुकुर इव मुहुर्मुहुः प्रमृष्टे प्रतिफलितं ददृशे वपुः स्मरस्य ॥ ३८ ॥

उन्मेषिभूषणरणज्झणनादवाद्य-
नृत्यत्स्तनार्पितमनोहरहारलेखाः ।
ऊहुर्विचित्रशुचिवर्णककाम्यभासः
स्मेरां श्रियं स्मरमहोत्सवभूमयस्ताः ॥ ३९ ॥

इत्याहिताविवरवारिकृताभिषेका-
स्ताः शीतमित्यथ सवेपथवो वदन्त्यः ।
यूनां परप्रणयशालिषु मानसेषु
प्राक् प्राविशंस्तदनु दोर्द्रुमपञ्जरेषु ॥ ४० ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये सलिलक्रीडावर्णनो
नाम दशमः सर्गः ।

---

37a, M3 अधि for अभि
d, M समरखक्षत for समसरदच्युत

38b, M गम्य for काम्य
In the colophon M3 has लीला for क्रीडा

# एकादशः सर्गः

अथ सुदृशां प्रियप्रणयविभ्रमभावनया
समसमुदियाय नैशसुरतोत्सवसस्पृहता ।
रविरपि सञ्जहार करडम्बरमम्बरतः
फलमभिवाञ्छितानुपदभावि हि भव्यधियाम् ॥ १ ॥

अवसितवासरावसरनृत्यरसोल्लसित-
त्रिपुररिपूत्तमाङ्गतलताडनतो विधुतम् ।
निरवधि वेधसः कनकधाम समिद्धमधो
व्यपगतखण्डमण्डमिव मण्डलमुष्णरुचः ॥ २ ॥

दिशि दिशि प्रवृद्धये प्रहितमम्बुजकोशरुचि-
प्रसृतकरो दधत् कनकधातुरसस्य तुलाम् ।
वपुरतिमन्दमाप्य रविरास्थित पात्रमयो*
वणिगिव मण्डलेऽथ समघट्टयदंशुधनम् ॥ ३ ॥

अधिकविषक्तकूबरयुगानमदंश(स)भुवो
विचलितकर्णचामरतिरोहिततान्तदृशः ।
कथमपि नातिकर्कशखलीनधृता वियुतः
सवितुरवातरन्नपरशैलशिरस्तुरगाः ॥ ४ ॥

---

3-13. Not found in M3; and N begins with 12b, one folio being lost.

अनुसृतमार्द्रया कमलिनीमकरन्दरुचा
परिणतकोकशोकवशवीक्षणबाष्पभरम् ।
रतरसिकाङ्गनानयनदर्पजलस्नपितं
समधित मन्दतां सपदि धाम गभस्तिभृतः ॥ ५ ॥
रविरुचितापतो द्रुतमहारजताद्रिशिला-
बहलरसाङ्कपङ्कपटसन्नशफं पतताम् ।
समजनि वाजिनां गतिरपास्तरयाऽस्तगिरा-
वहरहरत्ययेऽपि परिवृद्धिमिवानयताम् ॥ ६ ॥
अधिगतजिह्मभावमुपपादितसंघटनाः
सपदि भविष्यदन्धतमसौघभियेव भृशम् ।
परगिरिशृङ्गमारुरुहुरुष्णकरस्य कराः
परपरिभूतिषु प्रथममेव न जाग्रति के ॥ ७ ॥
स्फुरदरुणप्रभाभरणभास्वरभावभृतां
भृशपरिमण्डलेन बहलोष्मविशेषरुचा ।
उर इव शार्ङ्गिणः खमथ कुङ्कुमकान्तिजुषा
जलधिसुतास्तनेन कृतमाकपिशं रविणा ॥ ८ ॥
त्रिदिवसदां सदाप्रकटिताशया प्रथिमता*
विहततमोगतिर्विजितविष्णुपदः पतनम् ।
रविरपि नाम साम्प्रतमयं यदवापदहो
बत दुरतिक्रमा कृतधियामपि कालगतिः ॥ ९ ॥
गुरुरथपातसंक्षुभितसिन्धुसमुच्छलित-
स्फुरदुरुवाडवानलशिखापटलीतुलना ।
विजडिमशालिनीमभिनिविश्य दशामशनै-
रशिशिररोचिषो दशशती रुरुचेऽथ रुचाम् ॥ १० ॥

9b,M has विजित for which विहत is suggested.

चरममहीध्रमस्तकतटस्थगितस्य रवे-
रवनतिमागताः सरसकुङ्कुमकान्तिरुचः ।
उपदधुरंशवः परुषपट्टससर*
द्रुतजगदण्डखण्डकनकस्रुतिसुन्दरताम् ॥ ११ ॥

निपतितमुज्जिहीर्षुरभिसङ्ग(त)पिङ्गलिम
ग्रहपतिपद्मरागमणिकन्दुकमम्बुनिधौ ।
समवतरन्नतिष्ठिपदहःपुरुषोऽतिपटुः
पटमिव पाटलार्चिषमधिद्युतटि प्रकटम् ॥ १२ ॥

धृतविततोष्मणः समभिपत्य भुवो निबिडं
त्रुडिततनोर्दिनाद्विपपतेः प्रसभं जलधौ ।
उपचितचीनपिष्टपरिपुष्टविभाविभवं
वपुरथ कुम्भकूटमिव दृश्यमभात् तरणेः ॥ १३ ॥

इदमुदयोपयोगि वपुरप्यभिभावि हि मा
ज्वलनमयं जलैर्मम विरोधिभिरापततु ।
असमरुचावितीव विनिधाय रुचां पटलं
पयसि विरोचनो निविविशे विवशोऽम्बुनिधेः ॥ १४ ॥

पटुकटुकोष्मभिः कनकधातुघटस्य गिरेः
कुहरकटाहकेषु रविधामभिरुत्कथतः ।
उपरि भरादिवोच्छलितया छटया गगनं
प्रतिनवसन्ध्यया सपदि संवलितं शुशुभे ॥ १५ ॥

---

12b,N begins with 12b reading तिपद्म
d,M2 अभिद्युतपटोऽप्रकटम् for the above.
13,M3 omits cd and begins with 17
14a,N पुनरप्य for वपुरप्य
d,M विविशे for विवशो

15a,M कटक for कनक
c,M shows lacuna after छटया, completed by N
d,M shows lacuna before सपदि, completed by N

कृतविकरालकालकरवालविलूनवियद्-
विकटशिरोऽनुकारिरविमण्डलनिःसृतया ।
असुलभरोधया रुधिरधारिकयेव समं
समजनि सन्ध्यया घटितपाटलिम द्युतटम् ॥ १६ ॥

परिणमता दृढं दिनपतिद्विरदेन तथा
विसृमरदीर्घदीधितिमयैर्दशनैरशनैः ।
दलितमभूत्पराद्रिमणिसानु रजःछटया
झटिति यथोदमज्जि दिवि सान्ध्यरुचिच्छलतः ॥ १७ ॥

प्रणतिपरायणा परिकलय्य दिनापचये
परिणतिमीयिवांसमभिसन्ध्यमशीतकरम् ।
करपुटकुड्मलानि नियमेन दधे जनता
नहि महतां क्षयेऽपि गुणगौरवमेति हतिम् ॥ १८ ॥

अचलतटीतिरोहिततयोन्मुखभावभृता-
मुपरि रुचां गता वितततां स्थिरसान्ध्यरुचिः ।
अकलुषपुष्परागगुरुदण्डभृताभ्रघटा
द्युतिमतनोद् विमानगवितानपटीव रवेः ॥ १९ ॥

रविरथपातनिर्धुतपयोधितरङ्गतति-
व्यतिकरधाव्यमान इव यावदगाद्गलनम् ।
दिनविगमारुणातपकुसुम्भकषायरसः
क्षतरुचि तावदम्बरमधात्परिधूसरताम् ॥ २० ॥

---

16b,M द्विरदरदो for विकटशिरो
17b,N दधदतिदीर्घ for विसृमरदीर्घ
18a,M परिकलन् ध्वनिना for परिकलय्य दिना
19b,M गता रुचां for रुचां गता; N स्थित for स्थिर
20b,N वाध्यमान for धाव्यमान
M3 कलनम् for गलनम्
c,M विषम for विगम
M रस for रसः
d,M3 अगात् for अधात्

तिमिरविषाणकोटिभिरहस्करहेमतटे
मदपरुषं प्रदोषवृषभेण रुषोल्लिखिते ।
वियदभितो बभार कृशसान्ध्यरुचिप्रचयैः
प्रचुरसुवर्णचूर्णपटलैरिव पाटलताम् ॥ २१ ॥
गगनवने गभस्तिदलसन्ततिभिस्तरुण-
स्तरणितरुः प्रदोषसमदद्विरदोद्दलितः ।
चिरमचलत्तथाऽनुपदमस्य यथा विशदं
दिशि दिशि शीर्यमाणमुडुपुष्पकुलं ददृशे ॥ २२ ॥
अनतिशयेन भुक्तसहवाससुखाः सुधियो
ध्रुवमनुयान्ति सौहृदभुवां विकृतिप्रकृती ।
यदभिविभाव्य भास्करवियोगहतां नलिनीं
जहुरिह चक्रवाकमिथुनान्यपि सङ्गतताम् ॥ २३ ॥
स्फुरति तदेव मण्डनविधौ मधुपायिकुलं
विकसति सैव सान्द्रमकरन्दरसोज्ज्वलता ।
अथ च गतेऽस्तमंशुमति नैव बभौ नलिनी
ध्रुवमसुपात एव दयितच्युतिरेणदृशाम् ॥ २४ ॥
श्लथदलवेणयः पतति भर्तरि तिग्मकरे
वपुरवनम्रपद्मवदनाः शतपत्रभुवः ।
वियुतरथाङ्गनामपृथुपक्षतिनिर्धुतिभिः
करतलताडनाभिरिव जघ्नुरथ व्यथिताः ॥ २५ ॥
श्रितवति शान्तिमूष्मणि कठोरतरे तरणे-
स्तरलिततारकोत्करकुशेशयकोषकुलैः ।

---

21d,M रजः for चूर्ण
22d,N मृदु for मुड
23b,M सुखं for भुवां
c,M हस्कर for भास्कर
d,M रिव for रिह
24d,M अतिपात for असुपात
d,M एतादृशाम् for एणदृशाम
25,26, M3 omits

समम्रुदमज्जि पङ्कपटलीमलिनच्छविभि-
र्वनमहिषैरिव घुसरसस्तिमिरप्रकरैः ॥ २६ ॥

गतवति कालमेघपरिवृष्टतमःसलिलैः
प्रचयिभिरम्बरे वन इवाशु परिप्लुतताम् ।
शिखिशिखयेव धूमपरिधूसरभावभृता
न चरमसन्ध्यया निविविशे न शनैर्नशनम् ॥ २७ ॥

मुषितविवेकवृत्तिरुपपन्नबहुस्खलितः
सुरतसुखाभिलाषजननो जितदृष्टिधृतिः ।
मद इव वल्लभावसथगत्युपदेशगुरुः
परिववृधे प्रदोषबहलः प्रसरस्तमसाम् ॥ २८ ॥

समदमहेभभिन्नकटदाननदीमलिन-
र्जगदवगाह्यते स्म दिवसान्ततमोविसरैः ।
असुचिरभाविशीतकरसङ्गमदिग्वनिता-
रतिगृहदग्धधूपविसृतैरिव धूमपटैः ॥ २९ ॥

दिव इव निःसृतैर्गिरिनदीभ्य इवोच्छ्वसितै-
र्भुव इव संप्लुतैः क्षितितलादिव चोल्लसितैः ।
जलधितलोद्भवैरिव ककुब्भ्य इवोत्फलितै-
स्तिमिरकुलैरनीषदुदमेषि मसीमलिनैः ॥ ३० ॥

कुसुमकरालितासु कबरीषु कुरङ्गदृशां
कुवलयकूटकुड्मलतटीषु सरित्सु तमः ।

---

26d, M प्रकटैः for प्रसरैः
27b, M इवांशु for इवाशु
28b, M सुखाविलास for सुखाभिलाष
b, M3 जननोचित for जननो जित
c, M सुभ्रुवामपथ N वल्लभावसथ M3 वर्णभावसथ
29,30, M3 omits
30c, M जलौद्भिदैः for जलोद्भवैः
d, N कलुषैः for मलिनैः

मदमुचि दन्तिनां कटकटाहककोटरके
स्फुटितमर्जाजटाद्विकटषट्पदपेटकताम् ॥ ३१ ॥

अनुकरशीतमुख इव भैरवता वहता
बहुबाहुषण्डपरिपुञ्जनया नूपुरम्* ।
अजनि परस्परान्वयविधिर्जगदाक्रमण-
प्रवणमहोदयेन तमसा नु तदा ककुभाम् ॥ ३२ ॥

जगदुदरे निधाय ससमुद्रनगाद्रिवनं
पयसि निषेदुषा क्रमविलङ्घितलोकभुवा ।
अनवसितश्रिया दुरवबोधनयोद्धतिना
सपदि न कृष्णता न समभारि तमीतमसा ॥ ३३ ॥

यदुरुहिरण्यगर्भकनकाण्डकवाटतले
दिनकरदीपकज्जलजमाह्वि ससञ्ज रजः ।
तदिदमुषावतारमरुदाहतिशातनया
विगलितमन्धकारपटलच्छलमुच्छलितम् ॥ ३४ ॥

प्रियवसतिप्रयाणसमये पिदधत्पदवी-
मिदमुपकारि नस्तम इतीव निमग्नगमाः ।
अलिमलिनस्य वेणिवलयस्य रुचां निचयै-
रभिसरणोत्सुकाः प्रियतया पुपुषुः सुदृशः ॥ ३५ ॥

तिमिरमबाधताविुतयोर्मिथुनं पततो-
र्विधिबहुधाकृताभिसरणोत्कधियस्तु वधूः ।

---

31a,M तरङ्ग for कुरङ्ग
32a,N अनुकरणाभिमुख for अनुकरशीतमुख
c,M3 यान्नपरं for यान्नूपुरम्
33,M3 omits; b,M is not clear for पयसि निषेदुषा
34b,M3 ससर्ज for ससञ्ज
35d,M प्रियतमाः for प्रियतया
M सुदृशाम् for सुदृशः
M3 प्रियतमाय ययुः सुदृशः

विषयविशेषभेदपरिणामगुणागुणयो-
र्नहि जगतः स्वभावसमवायि समुन्मिषितम् ॥ ३६ ॥

इत्युद्वृत्तसमुद्धतान्धतमसव्याधूतविश्वस्थितौ
कल्पापायमहाभयेऽपि सहसा मग्ना तमिस्रामुखे ।
ध्यात्वाग्रे शिवशेखरोदयमनुद्विग्नैव तस्थौ प्रजा
प्रत्यासन्नसुखोदयो हि न मनः क्लिश्नाति दुःखोद्गमः ॥ ३७ ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये दिनान्तवर्णनो
नाम एकादशः सर्गः ॥

---

36,M3 omits; b,M विधिवद्दुधाक्रताभिसरशोकधियस्तवधूः N विधिवदुपाक्रताभिसरणोत्कधियस्तु
c,N परिणामि for परिणाम
d,M स्वत्ताव for स्वभाव
37a,M इत्याक्रत्त for इत्युदवृत्त

# द्वादशः सर्गः

अथैषदाधूततमोनुबन्धा प्राच्यां रुचिः केतकधूलिवर्णा ।
एष्यन्निशानाथचरिष्णुरथ्यरथ्या रजोराजिरिवाविरासीत् ॥ १ ॥
क्राम्यत् क्रमेणाम्बरगोचरेऽपि वलक्षमालक्ष्यत धौतधिष्ण्यम् ।
आविर्भवद्दुर्लभचन्द्रसङ्गक्षपावपुश्चन्दनचूर्णचारु ॥ २ ॥
श्रीः शीतरश्मेर्ददृशेऽथ दृश्या प्राच्यामुदञ्चत्तिमिराकुलानाम् ।
आश्वासनोक्तीर्जगतां विवक्षोः स्मितप्रभेवोन्मिषिता मघोनः ॥ ३ ॥
तमोभिराधूसरिताधुनैव दोषाकुला साम्प्रतमेव भूत्वा ।
सैवाबभौ रात्रिरुपायतीन्दौ समागमः कस्य सतां न भूत्यै ॥ ४ ॥
अथ क्रमान्मुग्धमृणालकन्दसौन्दर्यगर्भा नुदती तमांसि ।
लेखोदगादिन्द्रदिशः सितांशोरैरावणस्येव विषाणकोटिः ॥ ५ ॥
केलिक्रियाशक्रकराग्रकृष्टशचीकचस्रस्तवतंसशोभैः ।
इन्दोरमन्दैः खचिता मयूखैः पौरन्दरी सुन्दरतां दधे दिक् ॥ ६ ॥
कदम्बधामाधिकगौरमिन्दोर्विषक्तमूहे सुरधाम्नि धाम ।
उषानिलारूषितकल्पवल्लीपरिप्लुतप्रौढपरागलीलाम् ॥ ७ ॥
अरोहतो धिष्ण्यपदं हिमांशोरम्भोनिधेर्गर्भगृहान्निरीय ।
सोपानराजीष्विव राजितासु विशश्रमुर्वीचिचमूषु पादाः ॥ ८ ॥

---

1a, M अथैकदा N अथैषदा०    5d, M3 ऐरावतस्य for ऐरावणस्य

दरीषु दूरं तमसोऽभियातः पलायनाध्वानमिवाथ रोद्धुम् ।
समं समेत्यैव शशाङ्कपादैराचक्रमे भूधरचक्रवालम् ॥ ९ ॥
आसाद्य सद्यो द्युतलं मयूखैस्तमः शशी प्राग्जगतां जहार ।
महात्मनामुन्नतिमार्गलाभे नान्योपकारात्करणीयमन्यत् ॥ १० ॥
द्यामुज्जिहानः परिपाटलाभाः प्रभाः पयोधेश्चिरमाचकर्ष ।
दिक्कामिनीमण्डलमण्डनाय प्रवालवल्लीरिव शीतरश्मिः ॥ ११ ॥
शिखाभिराश्लिष्ट इवौर्ववह्नेरत्युल्बणां पाटलतां प्रपन्नः ।
सिन्धोस्तरङ्गैरिव नुद्यमानो जवाज्जगाहे गगनं मृगाङ्कः ॥ १२ ॥
तारासु तारापथभित्तिभागे तिरोदधत्या वपुषो विशेषान् ।
पुराणचित्रप्रतिमोपमासु ज्योत्स्नासुधाकूर्चिकया निपेते ॥ १३ ॥
ततः कराक्रान्तचरत्कुरङ्गच्छायः स्पृशन् कर्कटवृश्चिकादीन् ।
तुतोद नीलं तिमिरेभवृन्दं ज्योत्स्नासटाङ्को हरिणाङ्कसिंहः ॥ १४ ॥
श्यामां समाश्लिष्य सरागमिन्दौ नभस्तलं तल्पमिवाधिरूढे ।
तमोमुचः सख्य इवोच्छ्वसन्त्यो दिशः शनैर्दूरमथापसस्रुः ॥ १५ ॥
वेणीषु मूर्च्छामिव संप्रयाताः कपोलयोर्लास्यमिवादधानाः ।
स्मितेष्वथोच्छ्वासमिवोद्वहन्तो विलासिनीः शिश्लिषुरिन्दुपादाः ॥ १६ ॥
ददौ तथोद्दीपितमन्मथार्तिः शशी प्रभामत्ततयोन्मदत्वम् ।
विलङ्घयामास यथा प्रवृद्धो भ्रुवोऽपि मूर्तिं मकरावचूलः ॥ १७ ॥
कृतोपकारे हि निवेशयन्ति प्राणैरपि प्रत्युपकारमार्याः ।
तथाहि लब्ध्वाभ्युदयं समुद्रादवीवृधत्तं शशभृत्स्वधाम्ना ॥ १८ ॥
स्तनेष्विवाम्भोरुहकुड्मलेषु कृत्वा करैः पीडनमार्द्ररागः ।
नयन् विकासं कुमुदाननानि वापीषु कामीव ललास चन्द्रः ॥ १९ ॥

---

9b,M धान for ध्वान
d,M चक्रवालः for चक्रवालम्
10,M3 omits; c,N उन्नत for उन्नति
11a,M लाभ for लाभाः
15,M उत्स्वसन्त्यः for उच्छ्वसन्त्यः
16c,M उत्स्वास for उच्छ्वास
d,N इन्द्रपादाः for इन्दुपादाः
17,M3 omits; a,M तदा for ददौ
19d,N कामी च वापीषु

निपीतसन्ध्यामदिरारसायां निद्राजुषि क्षीबतया क्षपायाम् ।
कुमुद्वतीं चुम्बितुमात्तकम्पो बिम्बच्छलेनोपससर्प चन्द्रः ॥ २० ॥
कदम्बधूलीधवलेन धाम्ना समेधयन् कैरवकोरकाणि ।
मनोभिदः पुष्पशरस्य सख्युश्चक्रेऽस्त्रसंधानमिवोडुराजः ॥ २१ ॥
अथाददे तत्क्षणमात्रनिम्नविमृष्टरात्रिक्षयखेदिनीभिः ।
त्वराश्लथग्रन्थिगलद्विभूषं प्रसाधनश्रीः प्रियवल्लभाभिः ॥ २२ ॥
प्राणेशदूतीप्रणयार्द्रवाक्यप्रमोदपर्याप्तिविहासिनीभिः ।
दधे तदा दृष्टिभिरेव तासां विलासकर्णोत्पलमण्डनश्रीः ॥ २३ ॥
रतत्वरावेशसकम्पपाणिविन्यासशैथिल्यधरैर्वधूनाम् ।
रतौ पुरः पातमिवामृशद्भिर्नास्थायि गाढं कबरीषु पुष्पैः ॥ २४ ॥
हारावली गाढतरप्रियाङ्गसङ्गे विधत्ते व्यवधिं क्रुधेव ।
औत्सुक्यकम्पोच्छ्वसितैः स्तनाग्रैरामुच्यमाना नुनुदेऽङ्गनानाम् ॥ २५ ॥
अबन्धि ताभिः कठिनावकृष्टसन्धानसूत्राङ्कितपाणिशाखम् ।
उच्छ्वासिपीनस्तनपूर्यमाणः कृच्छ्रात् त्रुटत्कञ्चुककोणसन्धिः ॥ २६ ॥
संलापयन्त्या दयितस्य दूतीं वध्वा विभूषां विनिवेशयन्त्याः ।
प्रसन्नता कापि मुखस्य जज्ञे वेषश्रिया नु प्रियवार्तया नु ॥ २७ ॥
बिम्बच्छलेन स्वरवासगेहे तन्व्याः कपोलेऽवततार चन्द्रः ।
जगज्जिगीषोन्मिषितस्य सख्युः सभाजनायेव मनोभवस्य ॥ २८ ॥
आबिभ्रती बभ्रु बभौ नतभ्रूः कालीयकीयं तिलकं ललाटे ।
निमग्ननिःशेषनवस्मरेषुस्वर्णोज्ज्वलत्पुङ्खमुखाङ्कितेव ॥ २९ ॥

---

20,M3 omits; c,M कम्पितु for चुम्बितु
22,M3 omits; a,M विघ्न for निम्न
b,M विसृष्ट for विमृष्ट
24a,MN विजित्वरा for रतत्वरा
c,N रणैः for रतौ
25b,M3 मुधैव for क्रुधेव
26b,N शाखां for शाखं; c,M3 उत्स्वासि for उच्छ्वासि

गुणग्रहोत्पीडनयुज्यमानश्रोणीपटाग्रस्फुटदृश्यनाभि ।
नखांशुकल्माषितनीविबन्धं बबन्ध काञ्चीं जघने घनोरूः ॥ ३० ॥
शुद्धेन सद्वृत्तगुणान्वितेन निगूहनेष्वारसता सलीलम् ।
पुरन्ध्रिदोष्कन्दलिकास्वसञ्जि पत्येव गाढं वलयव्रजेन ॥ ३१ ॥
ररास रम्यं रशना शनैर्यत् तदा तदेवाजनि जृम्भमाणम् ।
नितम्बशय्यारसिकस्य नार्याः प्रबोधतूर्यं मकरध्वजस्य ॥ ३२ ॥
आलम्बि मञ्जूज्ज्वलशिञ्जितेन नतभ्रुवो नूपुरमण्डलेन ।
उन्माथिनो मन्मथकुञ्जरस्य विशृङ्खलं शृङ्खलपाशकश्रीः ॥ ३३ ॥
प्रियोत्सुकाया जघनेन कञ्च्याः कण्ठेन हारस्य विरुद्धबन्धे ।
मिथो रतानन्दमिव प्रदातुं कृतो विसर्गः स्वपरिच्छदस्य ॥ ३४ ॥
तिरस्क्रियायाः परिहारहेतोर्ज्योत्स्नाकृतायाः शरणं प्रपन्नाम् ।
दधुः सरोजश्रियमङ्घ्रिलग्नां नार्यो नवालक्तकविग्रहेण ॥ ३५ ॥
मृगीदृशामङ्गलतानुषङ्गिलावण्यलक्ष्मीपिहितप्रभेण ।
यथावदप्याकलितेन तासां स्फुटा न लेभे प्रतिकर्मणा श्रीः ॥ ३६ ॥
अस्मिन् क्षणे कामिषु तीव्रकाममनोरथाध्वक्षणसङ्गतेषु ।
ता मेनिरे भारमिवाङ्गभूषां सह्यान्तराया हि न रागवृत्तिः ॥ ३७ ॥
सख्यै वदन्ती प्रियवृत्तमेका मूकापि सङ्केतमगाच्चिरेण ।
कथा हि विश्वासिनि रागभाजां प्रियार्थगर्भा न परैति निष्ठाम् ॥ ३८ ॥
सखीकथाकौतुकिनं नतभ्रूरन्वङ्कनिषण्णं दयितं विवेद ।
सस्मेरवक्त्राभिमुखस्थितालीकनीनिकान्तःप्रतिबिम्बदृष्ट्या ॥ ३९ ॥
विधूतदीपं भवने भ्रमन्त्या स्थित्वा चिरं तल्पमथाश्रयन्त्या ।
मुहुर्गवाक्षेक्षितमार्गवीथ्या प्रत्यैच्छि कृच्छ्राद्दयितः कयापि ॥ ४० ॥

---

30a,N युञ्जमान for युज्यमान
b,M नाभिः for नाभि
31a,M3 वृत्ततया for वृत्तगुणा
37b,N मनोरथान्वक्षम for मनोरथाध्वक्षण
38b,N सूत्का for मूका
40a,M वधूस्तदीय for विधूतदीपं

कृतागसामप्यनुमेनिरे ताः सखीभिरभ्यानयनं प्रियाणाम् ।
तदेव हि प्रेम स एव रागो न स्थायितां यत्र बिभर्ति कोपः ॥ ४१ ॥
केलिक्रमेण प्रियमाक्षिपन्तमन्वक् समागत्य पिधानमक्ष्णोः ।
स्पर्शान्तरात् संस्पृशती चिरस्य तदङ्गमेका न किलाभिजज्ञे ॥ ४२ ॥
अतृप्तमुच्छ्वासतरङ्गितानि सबाष्पकण्ठस्खलिताक्षराणि ।
प्राप्तोऽनुगेहं निशशाम कान्तः सखीषु सन्देशपदानि तन्व्याः ॥ ४३ ॥
प्रिये वधूर्यत्सहसाभ्युपेते व्रीडां व्यधत्तावनतिं मुखेन्दोः ।
प्रागुत्सुकं कातरमिष्टदृष्टावतर्जयत्तेन रुषेव चेतः ॥ ४४ ॥
अर्धावनद्धच्युतवेणिपुष्पा सालक्तकाग्राङ्गुलिरार्द्रगात्री ।
भ्रष्टाङ्कसंसक्तविलेपशुक्तिसिक्तांशुकैका प्रियमभ्युदस्थात् ॥ ४५ ॥
शशाङ्कसंघर्षमिवावलम्ब्य कृतानुयात्राः प्रसभं तमोभिः ।
आमोदमत्तालिकुलाकुलाङ्ग्यो नाथानिवोच्चैरभिसस्रुरन्याः ॥ ४६ ॥

सन्ध्यानृत्यभ्रमिशिवभुजाभ्रंशिभस्मौघभासि
ज्योत्स्नापूरेऽपरिमिति जगद्व्यश्नुवाने हिमांशोः ।
एकैकात्मप्रभवविशिखस्यूतगात्रैरिवाथो
रागिद्वन्द्वैर्झटिति घटना गाढमन्योन्यमूहे ॥ ४७ ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये चन्द्रोदयप्रसाधनवर्णनो
नाम द्वादशः सर्गः ।

---

41c,N चैव for एव
42b,N अन्वक्षम् for अन्वक्
d,M एकापि for एका न
43a,M अदृष्ट for अतृप्त
c,N देहं for गेहं
44cd,M दृष्ट्यावितर्जयत् for दृष्टावतर्जयत्
45,M3 omits; a,N बद्ध for नद्ध
46b,M कृतानुयाताः for कृतानुयात्राः
47a,N नृत्त for नृत्य

## त्रयोदशः सर्गः

धृतसन्धिरसो विचित्रवृत्तिर्विदधानः स्फुटशुद्धपात्रयोगम् ।
मधुवारविधिः सनायकाङ्को ववृधे नाटकवन्नितम्बिनीनाम् ॥ १ ॥
दधतस्तरुणानवेक्ष्य तृष्णामथ चित्रग्रहगृध्नुरासवाङ्कम् ।
अमृजत् स्मरकिङ्करो वधूनां मुखपारीः प्रमदाश्रुवारिसेकैः ॥ २ ॥
क्षुभितोत्कलिकेऽथ रागसिन्धौ सशशिश्रीर्मणिपारिजातयुक्ता ।
पिशुना समुदैष्यतः प्रियाणां मदिराभूद्दयिताधरामृतस्य ॥ ३ ॥
सममाहितपक्ष्मपातमारान् मदिरारागिणि पेतुरुत्सकानि ।
नयनानि वधूमुखे च यूनां चषके चालिकुलानि सोत्पलाङ्के ॥ ४ ॥
लुलितालसलोचनं चलोष्ठं विलसत्कान्तकपोलमायताक्ष्या ।
निदधेऽधिमुखं सुखाय पत्युर्मुखगण्डूषसुरा नु भावना नु ॥ ५ ॥
यदभूषयदाननं नताङ्ग्याश्चषके विम्बवशादिमामतोऽसौ ।
परिणम्य कपोलयोः सुरा तद् विदधे प्रत्युपकारिणीव कान्तिम् ॥ ६ ॥
सपरिस्रुतिवीचिभिः सकम्पं चषके चन्द्रमसं निरीक्ष्य दध्युः ।
मकरन्दपिशङ्गदीर्घिकाम्भःशफरीस्फारविवर्तनं युवानः ॥ ७ ॥

---

5a,M3 चलौष्ठं for चलोष्ठं
c,M अथ for अधि
c,N मुखाय for सुखाय
6b,M उपागतोऽसौ for इमामतोऽसौ
d,N कान्तम् for कान्तिम्
7b,M वध्वाः for दध्युः

प्रतिमाहिमरश्मिरासवस्थः परिपीतो हिमशीतलस्वभावः ।
कुरुते मम कम्पमेष शैत्यादिति मुग्धा मदघूर्णनं विवेद ॥ ८ ॥
मदकोपकषायितायताक्ष्या मदिरारागिकपोलपालिकायाः ।
बुबुधे स्खलता प्रियेण तन्व्याः श्वसितैस्तापितसीधुभिः प्रकोपः ॥ ९ ॥
वहतोर्मदमानयोर्विमोहं नयतोः काममपि विक्रियां स्वभावम् ।
प्रथमः प्रविवेश चित्तमासामपरः क्वापि निरीय विद्रुतोऽभूत् ॥ १० ॥
दयितोष्ठ्यरसामृताभिलाषाच्चषके सासवके कृतावतारः ।
परिपीतपरिस्रुतिच्चताशः परिभावीव निशाकरो ननाश ॥ ११ ॥
परितः परिणाममीयुषोच्चैर्मदिरामोदमदेन मानिनीनाम् ।
स्खलितेऽपि वपुष्यवाप यन्न स्खलनं प्रेम तदद्भुतं बभूव ॥ १२ ॥
प्रतिमोपगतः प्रियाकरस्थे चषके निःश्वसितावधूतशीधौ ।
अरुणां रुचिमाश्रितः सकम्पः क्षुभितः चीब इव च्चपाकरोऽभूत् ॥ १३ ॥
अमणन्मृदु यत्पुरन्ध्रिरन्तः प्रियमास्यासवमेत्य पाययन्ती ।
स्फुटमस्य तदेव तृप्तियोग्यं व्यधित स्वादुतरावदंशभावम् ॥ १४ ॥
परिवर्तितगीतयोऽर्धकण्ठे भ्रमितभ्रूलतमीषदीच्चमाणाः ।
करपल्लवकम्पमानपार्यः सुदृशः शीधुमदोदयं विवव्रुः ॥ १५ ॥
चषके मधुनिर्धुतासिताब्जप्रसरत्केसरकर्दमेऽवसन्नाम् ।
रतचाटुगुणैर्नवोढवध्वाः शनकैर्दृष्टिमथोज्जहार कान्तः ॥ १६ ॥
यदनिष्ठितवस्तु यत्सहासं यदकाण्डोद्धति यत्स्वभावमुग्धम् ।
यदसाधुपदं स्खलत्पदं यत् तदुदैत् चीबधियां वचः कथासु ॥ १७ ॥
हसितेव जितेव तर्जितेव च्चयितेवोन्मथितेव निर्धुतेव ।
मधुमानमदेन मानिनीनां मनसः क्वापि जगाम मानवृत्तिः ॥ १८ ॥

---

8d, N पूर्णनं for घूर्णनम्
10a, M वदतोः for वहतोः
11, M3 omits; c, M परिवीत for परिपीत
13c, M तरुणां for अरुणाम्
14, M3 omits; a, M अमृशत् for अमणत्
16a, M च्युत for धुत
17c, M यदशाठ्यपदं for यदसाधुपदं

स्मरसायककण्टकैः कराले मधुपूरोच्छलिते सरागपङ्के ।
हृदये सुदृशां तमोमयेष्वे शकितं न त्रपया पदं निधातुम् ॥ १९ ॥
अलसं वचनं दृशो विलोलाः स्थिरविश्रम्भरसार्द्रचेष्टितानि ।
कलहेऽपि रतिं वितन्वताऽऽसां मधुना स्रुपकृतं मनोभवस्य ॥ २० ॥
मधुना शशिनः सुधेव लेभे मधुमाधुर्यमिवाददे शशाङ्कः ।
चषके प्रतिमोदयाददनीचैरुभयोः स्वार्थधियेति सङ्गमोऽभूत् ॥ २१ ॥
गतया परिवृद्धिमाननेन्दोरमृतं चारु चिरं परिस्रवन्त्या ।
स्मितचन्द्रिकया मधूपरागच्छविसन्ध्या तनुतामनायि तन्व्या ॥ २२ ॥
अमृतद्रवमात्मसात्करिष्याम्यमुनोद्गीर्णमतीव साधु सीधुः ।
प्रतिमोत्थममूर्छयन् मृगाङ्कं चषके चञ्चलवीचिघट्टनाभिः ॥ २३ ॥
रुरुचे चषकार्पिताननाया युवतेरुत्पलषट्पदोऽग्रवर्ती ।
समदादिव निर्गतस्तदानीं मनसो मानमयो महान्धकारः ॥ २४ ॥
श्रवणेन चटूनि रूपमक्ष्णा प्रणतिं भावनया मुखेन सीधु ।
सुतनुर्मनसाऽनुरागबन्धं प्रतिजग्राह समं प्रियादमूनि ॥ २५ ॥
असिताब्जपरागपांसुपिङ्गे मधुताम्रद्युतिपद्मरागपात्रे ।
प्रतिबिम्बितकुङ्कुमाङ्ककान्तावदनाब्जं विविदे विटैर्गरिम्णा ॥ २६ ॥
मधुनि प्रतिमां नवोढवध्वाः स्पृहया प्रेष्ठमुखस्य भावयन्त्याः ।
सुरभिश्चषकोत्पलस्य नाभूद् व्यदधन्नेत्रनिमीलनान्यभीष्टः *॥ २७ ॥
विततार मदं जहार लज्जामपुषत् कामकलां ददेऽनुरागम् ।
सुरतैकसखी सुखं वधूनां विदधे नो किमिवातुलं प्रसन्ना ॥ २८ ॥

---

19b, M त्सलित for च्छलित
20a, M3 लवुसंचलनं for अलसं वचनम्
b, M3 रसानि for रसार्द्र
c, M नतिं for नीतं; चतन्वता for वितन्वता
21b, M दधे for ददे; M शशाङ्कम् for शशाङ्कः
d, M साधिपयोऽति for स्वार्थधियेति
22, M generally has श्र where स्र is expected.
b, M3 चारुतरं for चारु चिरं
25, M3 omits; c, N रागवत्तां for रागबन्धं
26b, M3 ताम्रे for पात्रे
27d, N विदधन् for व्यदधन्; M3 नेत्रनिमीलनाय कान्तः for the reading given above

रसितेन रसादनूनमाना मधुना क्षीबतया तथा विभक्ता ।
अपराद्धमपि प्रियं यथाऽसौ सभयाऽस्थापयत प्रसाद्यपक्षे ॥ २९ ॥
सुरभिश्वसितं सितायताक्ष्याः पतितं कोष इवादरेण गोप्तुम् ।
मदिरोत्पलमामिमील पार्यां दधते के न गुणेषु पक्षपातम् ॥ ३० ॥
स्मितपुष्पचितेषु सानुरागेष्वविपन्नस्वरवृद्धिषु प्रियाणाम् ।
तरुणैः परितृप्तता पिबद्भिर्न मुखेष्वाकलिता न चासवेषु ॥ ३१ ॥
विनयन् विनयं स्मितानि पुष्णन् नयनानि भ्रमयन् वचांसि धुन्वन् ।
मुखराणि विभूषणानि कुर्वन् वरवेषो ववृधे मदो वधूनाम् ॥ ३२ ॥
गणिकेव गुणागुणानभिज्ञा प्रतिलभ्यान्तरमुत्कटानुरागा ।
न विकारशतानि नातितीक्ष्णा मदिरा दर्शयति स्म कामुकानाम् ॥ ३३ ॥
मणिशुक्तिशतेषु मानिनीभिर्मधुसंक्रान्ततनुः पपे शशी यः ।
अचिरेण चकार चन्द्रिकाभिः स मनो मानतमःप्रमुक्तमासाम् ॥ ३४ ॥
मधुपः शुशुभे निलीनमूर्तिश्चषके नीलसरोजगन्धवन्धात् ।
प्रतिमाशशिनः कलङ्कलेशो मधुना धौत इवोत्प्लुतः क्षणेन ॥ ३५ ॥
चषकाभिमुखं यदा ननाम प्रमदा भर्तरि भाषितान्यगोत्रे ।
प्रतिबिम्बपदेन जातलज्जा मधुनीव प्रविवेश तेन नूनम् ॥ ३६ ॥
अपदिश्य मदोदयार्तिमन्या त्वरमाणा रमणे निरस्तशुक्तिः ।
शयनीयनियोजनाय दासीं न्यगदद् वल्लभनन्द्यमानवाञ्छा ॥ ३७ ॥
मधुपूरपरिप्लुतेऽङ्गनानामतिवृद्धोऽप्यवतीर्य चित्तमार्गे ।
विजहार निरर्गलं प्रकोपो न च चस्खाल यदद्भुतं तदासीत् ॥ ३८ ॥
अविनीतिलतावसन्तमासः सुरताशोकपुरन्ध्रिपादघातः ।
नयनोत्पलषण्डमातरिश्वा जगृहे पोषदशां मदो वधूनाम् ॥ ३९ ॥

---

**29c,M3** मिव for मपि
**d,M** प्रसाद for प्रसाद्य
**33c,M** चाति for नाति
**34a,M3** कामिनीभिः for मानिनीभिः
35b,N गर्वात् M बन्धात्
37c,M दासी न्वगदत् for दासीं न्यगदत्
38,M3 omits.
39a,M अवनीति for अविनीति
c,M ताण्ड for षण्ड; d,M घोष for पोष

अग्रे विकीर्णनिभृतप्रणयार्द्रवाक्य-
पुष्पाञ्जलिः सरलविभ्रमसूत्रधारः ।
प्रस्तावनां दयितसन्धिरसैः शिवार्था-
मित्थं व्यधत्त रमणीरतनाटकस्य ॥ ४० ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये मधुपानवर्णनो
नाम त्रयोदशः सर्गः ।

---

40c, M शिवाङ्का for शिवार्था

The colophon in N reads आपानविभ्रमो नाम

# चतुर्दशो सर्गः

रसरभसया रागस्थित्या मुहुः प्रियलालसं
चिरगुणितया मानावृत्त्या मुहुः पिहितस्पृहम् ।
मधुमदमुदा लेभे लुभ्यन्नदुर्लभवल्लभो
निधुवनविधिक्रीडालम्बं नितम्बवतीजनः ॥ १ ॥

ग्रहगणगुरौ रागालग्ने विलासमहोत्सवे
वपुषि सुदृशां श्रीप्रासादे प्रतिष्ठितमन्मथे ।
कुचकलशकश्लिष्टैः सद्यः करैः सुसमाहितं
पुलकसलिलस्नातो जज्ञे जनो रतिकल्पकः ॥ २ ॥

अनुमतमिवानेतुं पोषं तमीतमसां कुलं
दिशि दिशि दृशो विन्यस्यन्त्यः श्रियाङ्कुरिताञ्जनाः ।
मदनहुतभुग्धूमच्छायैः पटैरसितैर्वृताः
प्रययुररसद्भूपैरङ्गैः प्रियानभिसारिकाः ॥ ३ ॥

समधित न या रागिद्वन्द्वं बभूव न सा सखी
न मदनवशे यावस्थातां न तावपि रागिणौ ।

---

1b,M पुषितया for गुणितया
c,M लभ्यं for लुभ्यन्
2a,M राशा for रागा; d,M घनो for जनो
3a,M अनुगत for अनुमत
d,M अलसीभूतैः for अरसद्भूपैः

मिथुनमिषुभिर्विव्याध क्रमेण न स स्मरो
न्यविशत न यन्मानग्रन्थौ न विद्धमभूच्च तत् ॥ ४ ॥
अहमहमिकामत्यां सत्यां शरासनयष्टिकां
कुसुमधनुषो यत्तादृक्षीदृशोऽवललम्बिरे ।
कथमितरथा क्षीबक्षीबाः सवेपथुभिः पदैः
सरकसदनाल्लीलातल्पं ययुर्न च चस्खलुः ॥ ५ ॥
स्तनकलशयोरर्धोद्स्ते तुरङ्गदृशोंऽशुके
श्लथयति शनैर्नीवीसन्धिं सकम्पकरे प्रिये ।
अभिमुखसुखस्वेदक्लेदाज्जडा मणिमेखला
च्युतिमिव शुचा शङ्कित्वाङ्काच्चुकूज न कोमलम् ॥ ६ ॥
समजनि न तत्प्रेम त्यक्तं यदीषदपीर्ष्यया
स्मरसुखसखी नासावीर्ष्या विना कलहेन या
न खलु कलहः सोऽन्योन्यं यः प्रसादनवर्जितः
प्रसदनविधिर्नासौ यूनां न येन विलिल्यिरे ॥ ७ ॥
अनुनयगुरुर्गोष्ठीबन्धो मुखासवसम्पदां
शपथशिबिरं विश्रब्धानां धियां प्रथमातिथिः ।
अविनयवचोवादस्थानं पुरन्ध्रिषु पप्रथे
मदविलसितस्यैकाचार्यश्चिरं रतिविभ्रमः ॥ ८ ॥
रतिकृति गते मायानिद्रां पुरोऽर्पितचुम्बना
पुलकपयसा मत्वा तत्त्वं मुखापहृताननना ।
कृतकशयितो निग्राह्योऽसीत्युदीर्य कलं वधू-
र्व्रणितमधरे दत्त्वा दन्तैरपूरयत स्पृहाम् ॥ ९ ॥

---

5a,N मत्या for मत्यां; N सत्यं for सत्यां
c,M क्षीबक्षीबैः for क्षीबक्षीबाः
d,M सरल for सरक

6c,N खेद for स्वेद
7b,M वा for या; d,M विनिन्यिरे for विलिल्यिरे

कलहकलया यत्संवृत्यै त्रपावनताननना
पिहितपुलकोद्भेदं सुभ्रूश्चकर्ष न कञ्चुकम् ।
दयितमभितस्तामुत्कण्ठां विवव्रुरनन्तरं
झटिति झटिति त्रुट्यन्तोऽन्तःस्तनांशुकसन्धयः ॥ १० ॥

चटुषु चटुले गाढाश्लेषिण्यपाररते प्रिये
यदविदितवत्प्रादुर्भूतं महार्घमकृत्रिमम् ।
किमपि मणितं केनाप्यन्तर्व्यधाप्यत कामिनी
मिथुनमथने तद्ब्रह्मास्त्रं बभूव मनोभुवः ॥ ११ ॥

मुहुरविशदा विश्रम्भार्द्रा मुहुः स्मृतमन्यवो
मुहुरसरलाः प्रेमप्रह्वा मुहुर्मुहुरस्थिराः ।
वितथशपथोपालम्भाज्ञा मुहुर्मधुरा मुहुः
परिववृधिरे निष्पर्यन्ता मिथो मिथुनोक्तयः ॥ १२ ॥

जघनवसनं मोक्तुं पाणेः प्रियस्य विसर्पतः
स्मरविवशया सभ्रूभेदं करेण सकम्पया ।
शिथिलशिथिलं नार्या नीवी न्यरुध्यत केवलं
मुकुलितवलीविन्यासेन प्रवेशपथः कृतः ॥ १३ ॥

वदननिहिते ताम्बूलांशे श्रिते रतिबीजतां
कुवलयदृशः पत्युर्जज्ञे स रागतरुस्तदा ।
किसलयमुचो यस्य च्छायामुपाश्रितयोस्तयो-
र्विषमविषमः कात्स्न्येनास्तं गतो विरहक्लमः ॥ १४ ॥

वदनशशिनः स्पर्शे शीतादिवागतवेपथुः
स्तनयुगलके भ्रान्त्वा तुङ्गे निलीन इव श्रमात् ।

---

10a,M न पादनताननना for त्रपावनताननना
11a,N अशान्त for अपार
c,M व्यधास्यत for व्यधाप्यत
12,M3 omits; c,N अङ्का for आज्ञा
13,M3 omits; c,N नीविः for नीवी
d,M मुचलित for मुकुलित

ज्वलितमदनाङ्गारे तन्व्यास्ततो जघनस्थले
सपुलकजलः पत्युः पाणिर्विलीन इवाभवत् ॥ १५ ॥
विपुलपुलके बिभ्रत्योष्ठौ चुचुम्बिषया चलौ
निभृतनयनन्यासं प्रेम्णा विलोकयति प्रिये ।
सममभिमतप्रेक्षातृष्णां त्रपां च समेतया
न करकुसुमं क्षिप्तं दीपे न चोज्झितमङ्गणे ॥ १६ ॥
त्रुटितगुणता सोत्कम्पाभिः कराङ्गुलिभिः कृता
चिरतरमपि भ्रान्त्वा तन्व्या न कञ्चुकसन्धिषु ।
झटिति विहिता लब्धोच्छ्वासं स्तनाद्वितयेन सा
कृतमिह कदा सद्वृत्तैर्नो मनोरथपूरणम् ॥ १७ ॥
न मणितपदैर्नाङ्गाश्लेषैर्न काक्षनिरीक्षितै-
र्न सुरतगुणैर्न व्याहार्यैरलभ्यत तत्सुखम् ।
पटु परिमृजन् स्वेनास्येन स्रुताश्रुकणे दृशौ
यदुदितरुषस्तन्व्याः कान्तः किमप्यनुभूतवान् ॥ १८ ॥
रतिपतिधनुर्ज्याटङ्कारो मदद्विपडिण्डिमः
सपुलकजलप्रेमप्रावृट्पयोधरगर्जितम् ।
निधुवनयुधस्तूर्यातोद्यं जहार नतभ्रुवां
जघनसरसीहंसस्वानः श्रुतिं रसनारवः ॥ १९ ॥
श्रमजलकणक्लेदक्लिष्टश्लथाङ्कुरपत्रकं
स्मररथधुराचक्राकारभ्रमन्मणिकुण्डलम् ।

---

15c,M3 ज्वलति for ज्वलित

16a,M चले for चलौ

c,M तृष्णा त्रपारसमेतया for तृष्णां त्रपां च समेतया

17c,M विहितं for विहिता

d,M सद्वृत्ते नो for सद्वृत्तैर्नो

18a,N नाङ्का for नाङ्गा

M वाक्षि for काक्ष

b,N सुरभि for सुरत; N नाप्याहार्यैः for न व्याहार्यैः

M अलभ्यत N अजन्यत

c,N यदुपरि मृजत् for पटु परिमृजन्

d,M रुचा for रुषः

प्रचलजघनप्रेङ्खत्काञ्चीगुणाञ्चितशिञ्जितं
सुरतमजनि क्रीडाभाजामुदूढविपर्ययम् ॥ २० ॥
विनयमपरिक्लिष्टं श्लिष्टं प्रियं परिचुम्बनं
निधुवनविधौ यद्यच्चक्रुश्चकोरदृशां नराः ।
प्रतिविदधिरे तत्तत्तेषां विशेषणशालि ताः
फलति सुधियां पात्रे न्यस्तः सहस्रगुणं विधिः ॥ २१ ॥
हठविघटितस्मेरच्छायाप्रयत्नधुताधरा
शिथिलवलितग्रीवा किञ्चिद्विवञ्चितचुम्बना ।
रमणसुहृदां कान्ताक्लृप्ता निरुद्धकचग्रहा
कृतककुपितक्रीडा कामप्यगात्कमनीयताम् ॥ २२ ॥
दशनवसने लौहित्येन स्तनेषु तथोष्मणा
मधुपपटलीधूम्रे धूमश्रिया कबरीभरे ।
सरुषि हृदये तासां ज्वालाकुलैर्दृशि कज्जलै-
रिति परिणमन्कन्दर्पाग्निर्विभक्त इवाभवत् ॥ २३ ॥
युगलमगलत्तर्षोत्कर्षे तरूत्पलशोभयोः
पटविघटनादूर्वोः पूर्वं प्रिये परिपश्यति ।
श्रुतिकुवलयं दीपोच्छित्त्यै निरास यदङ्गना
ज्वलति रसनारोचिर्दीपे तदाप निरर्थताम् ॥ २४ ॥
मधुमदमसौ सौभाग्यं तत्प्रियानुनयं स च
प्रतिघविरतिं साऽन्वक्तापं स मानविमाननाम् ।
स्मररसमसौ स व्रीडामोकं स चापि विदग्धतां
दयितहृदयस्वीकारं सा पुपोष मृगीदृशाम् ॥ २५ ॥

---

21c,M3 तासां for तेषां
शालि तां for शालि ताः
23b,M धूपे for धूम्रे
24,M3 omits; a,N गौरयोः for शोभयोः
25b,M क्लृप्तं for अन्वक्तापं
M मानविधूननाम् for मानविमाननाम्
c,N मुक्तिं for मोकं

पुलककणिकामुक्तासक्त्या करालकपोलकं
श्रमवशचलच्चक्षुस्तारं तरत्तिलकप्रभम् ।
अमलममिलत्पक्ष्मश्रेण्या प्रियावदनं यथा
सुचिरमपिबद्दृष्ट्या कामी मुखेन तथा कुतः ॥ २६ ॥
तनुरनुशये गाढाश्लेषो भुजेषु मदे महान्
वपुषि पुलकोद्भेदी दृष्टौ प्रदिष्टनिमीलनः ।
वचसि विचरच्चाटुश्चित्ते चरिष्णुरनीचकै-
रिति रतिरसावेशो यूनां ययौ शतशाखताम् ॥ २७ ॥
दशनदशनैरोष्ठो मम्लौ न पल्लवकोमलो
व्यपहतनखच्छेदादङ्गं शिरीषमृदुच्छवि ।
न भुजलतिका गाढाश्लेषे श्रमं ललिता ययौ
युवतिषु किमप्यव्याख्येयं स्मरस्य विजृम्भितम् ॥ २८ ॥
किमुपगमिता भर्त्रा तप्तद्विलोहवलदेकता-
मुत रमयितुः स्यूताङ्गेऽङ्गे शितैः स्मरसायकैः ।
विलयनमथ प्राप्ता रागानलोष्मभिरित्यहो
न पतिभुजयोर्निस्पन्दाऽन्तः प्रिया निरचीयत ॥ २९ ॥
अपि कृतवती येषु क्लान्तिं नवा नवमालिका
मृदुषु सुदृशां भारेणेव स्थितं परिकर्मणा ।
अलघु विहृतं तैरेवाङ्गैरनङ्गमहाहवे
किमिव सुकरं नारूढानां दशामनुरागिणीम् ॥ ३० ॥

---

26,M3 omits; b,M चरत् for तरत्
27a,M अनु for तनु; M मदो for मदे
b,M भेदो for भेदी; M प्रविष्ट for प्रदिष्ट
c,N विकटः for विचरत्
28b,N अनङ्गं for दङ्गं
c,N श्लेषैः श्रमं ललिता ययुः
29,M3 omits
d,M निष्फुलाङ्गी for निष्पन्दान्तः
30c,M3 विकृतं for विहृतं

विनयवियुतं यावद्यावत्त्रपापरिवर्जितं
कृशतरकृपं यावद्यावत्समाधिपराङ्मुखम् ।
धुतधृतिधुरं यावद्यावत्सुदीर्घमनोरथं
युवतिषु मुदे तावत्तावद्रताङ्गमभून्नृणाम् ॥ ३१ ॥

रुचिषु विलसन् फुल्लन् दृक्षु क्रियासु समुच्छलन्
भणितिषु लुठन् जृम्भासूद्यन्मुखेन्दुषु संगलन् ।
रतिषु निवसन्नङ्गे स्विद्यन्नदर्शि मृगीदृशां
मनसि विकसन्निष्टादिष्टोऽनुवृत्तिमहोत्सवः ॥ ३२ ॥

व्यसनमचलं यत्राचार्यो व्रतं विषयार्द्रता
सुहृदविनयो दासः प्रेम प्रभुर्मकरध्वजः ।
गृहमशिथिलाश्लेषः शय्या स्वरूपमभेदिता
रमणमिथुनान्यव्याख्येयां दशां विजगाहिरे ॥ ३३ ॥

कथमिव वयं के वा कस्मिन् विधावभवाम वा
किमुदितमदाः किं सोन्मादाः हताः शयिता मृताः ।
किमिव तदभूत्सौख्यं किं वा सुखेतरदित्यहो
सुरतविरतौ जज्ञुश्चिन्ताकृतोऽपि न कामिनः ॥ ३४ ॥

बलमकृतकं भूयान्वेषो विशुद्धिमदञ्जनं
सततसुरभिः कर्णोत्तंसः स्थिरस्थिति जीवितम् ।
अचरमतरं शृङ्गाराङ्कं प्रसाधनमव्ययं
प्रियचटुविधिः स्त्रीणामेकोऽप्यनेक इवाभवत् ॥ ३५ ॥

---

31a,M3 विधुतं for वियुतं, M2 अलघु for विनय
M तया for त्रपा
b,M कृशं for कृपं
32 of M is 31 in N; M3 omits.
a,M दृष्टि for दृक्षु
c,M विसरन् for निवसन्
d,M वृत्त for वृत्ति
34a,N किं for final वा
b,M किमु for मृताः
N breaks off at कृ of d कृतोपि up to
XV 9 a.
d,M3 योगिनः for कामिनः

समभिलषिताश्लेषे पूर्वं ततो धृतसाध्वसे
चलदवयवे कान्तासङ्गात्ततो विहितत्रपे ।
निभृतचटुभिश्चेतोरूपैरथो विवृताशये
युवतिसुरते विश्रम्भार्द्रे ततर्प न वल्लभः ॥ ३६ ॥

फलमलघु किं लीलावल्ल्या गृहं नु गुणश्रिया-
ममृतमथवैकस्थं पिण्डीकृतं नु रसायनम् ।
निधिरुत रतेः सर्वस्वं नु स्मरस्य न वल्लभै-
रिति सुवदनाबिम्बोष्ठानां रसः परिचिच्छिदे ॥ ३७ ॥

क्षणमनिभृतं श्लाघमानं क्षणं क्षणमुत्सुकं
क्षणमसुलभव्रीडं धीरं क्षणं क्षणमाकुलम् ।
ऋजुभिरशठास्तुष्टैस्तुष्टाः प्रकृष्टरता रतै-
र्विविशुरवशा वश्यैः पुम्भिः प्रियाः सरसां दशाम् ॥ ३८ ॥

चिरपरिचितश्रीशङ्कानां घनाञ्जनशोचिषां
श्रमजलपृथङ्नीता जह्रुः स्थितिष्वथ सङ्गिषु* ।
अलभत पदं निद्रामुद्रा वधूजनचक्षुषां
दलकुल इव श्यामाब्जानां शिलीमुखसंहतिः ॥ ३९ ॥

इत्थं ज्योत्स्नासमदमदिराच्चीविताासु क्षपासु
क्रीडाक्रोडीकृतमकृतकोत्कम्पमाश्लिष्टकण्ठाः ।
दृप्यत्स्त्रैणं प्रसभमकुतोभीतयस्तेन निन्यु-
र्हृष्टान्ताभिः कुसुमधनुषाभीक्ष्णमक्ष्णा शिवेन* ॥ ४० ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये सुरतसम्भोगवर्णनो
नाम चतुर्दशः सर्गः ।

---

39,M3 omits.

विनयवियुतं यावद्यावत्त्रपापरिवर्जितं
कृशतरकृपं यावद्यावत्समाधिपराङ्मुखम् ।
धुतधृतिधुरं यावद्यावत्सुदीर्घमनोरथं
युवतिषु मुदे तावत्तावद्रताङ्गमभून्नृणाम् ॥ ३१ ॥

रुचिषु विलसन् फुल्लन् दृक्षु क्रियासु समुच्छलन्
भणितिषु लुठन् जृम्भासूद्यन्मुखेन्दुषु संगलन् ।
रतिषु निवसन्नङ्गे स्विद्यन्नदर्शि मृगीदृशां
मनसि विकसन्निष्टादिष्टोऽनुवृत्तिमहोत्सवः ॥ ३२ ॥

व्यसनमचलं यत्राचार्यो व्रतं विषयार्द्रता
सुहृदविनयो दासः प्रेम प्रभुर्मकरध्वजः ।
गृहमशिथिलाश्लेषः शय्या स्वरूपमभेदिता
रमणमिथुनान्यव्याख्येयां दशां विजगाहिरे ॥ ३३ ॥

कथमिव वयं के वा कस्मिन् विधावभवाम वा
किमुदितमदाः किं सोन्मादाः हताः शयिता मृताः ।
किमिव तदभूत्सौख्यं किं वा सुखेतरदित्यहो
सुरतविरतौ जज्ञुश्चिन्ताकृतोऽपि न कामिनः ॥ ३४ ॥

बलमकृतकं भूयान्वेषो विशुद्धिमदञ्जनं
सततसुरभिः कर्णोत्तंसः स्थिरस्थिति जीवितम् ।
अचरमतरं शृङ्गाराङ्गं प्रसाधनमक्षयं
प्रियचटुविधिः स्त्रीणामेकोऽप्यनेक इवाभवत् ॥ ३५ ॥

---

31a,M3 विधुतं for वियुतं, M2 अलघु for विनय
M तया for त्रपा
b,M कृशं for कृपं
32 of M is 31 in N; M3 omits.
a,M दृष्टि for दृक्षु
c,M विसरन् for निवसन्
d,M वृत्त for वृत्ति
34a,N किं for final वा
b,M किमु for मृताः
N breaks off at कृ of d कृतोपि up to XV 9 a.
d,M3 योगिनः for कामिनः

समभिलषिताश्लेषे पूर्वं ततो धृतसाध्वसे
चलदवयवे कान्तासङ्गात्ततो विहितत्रपे ।
निभृतचटुभिश्चेतोरूपैरथो विवृताशये
युवतिसुरते विश्रम्भार्द्रे ततर्प न वल्लभः ॥ ३६ ॥

फलमलघु किं लीलावल्ल्या गृहं नु गुणश्रिया-
ममृतमथवैकस्थं पिण्डीकृतं नु रसायनम् ।
निधिरुत रतेः सर्वस्वं नु स्मरस्य न वल्लभै-
रिति सुवदनाबिम्बोष्ठानां रसः परिचिच्छिदे ॥ ३७ ॥

क्षणमनिभृतं म्लायन्मानं क्षणं क्षणमुत्सुकं
क्षणमसुलभव्रीडं धीरं क्षणं क्षणमाकुलम् ।
ऋजुभिरशठास्तुष्टैस्तुष्टाः प्रकृष्टरता रतै-
र्विविशुरवशा वश्यैः पुम्भिः प्रियाः सरसां दशाम् ॥ ३८ ॥

चिरपरिचितश्रीशङ्कानां घनाञ्जनशोचिषां
श्रमजलपृथङ्नीता जह्वुः स्थितिष्वथ सङ्गिषु* ।
अलभत पदं निद्रामुद्रा वधूजनचक्षुषां
दलकुल इव श्यामाब्जानां शिलीमुखसंहतिः ॥ ३९ ॥

इत्थं ज्योत्स्नासमदमदिराक्षीविताासु क्षपासु
क्रीडाक्रोडीकृतमकृतकोत्कम्पमाश्लिष्टकण्ठाः ।
दृप्यत्स्त्रैणं प्रसभमकुतोभीतयस्तेन निन्यु-
र्हृष्टान्ताभिः कुसुमधनुषाभीक्ष्णमक्ष्णा शिवेन* ॥ ४० ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये सुरतसम्भोगवर्णनो
नाम चतुर्दशः सर्गः ।

---

39,M3 omits.

विनयवियुतं यावद्यावत्त्रपापरिवर्जितं
कृशतरकृपं यावद्यावत्समाधिपराङ्मुखम् ।
धुतधृतिधुरं यावद्यावत्सुदीर्घमनोरथं
युवतिषु मुदे तावत्तावद्रताङ्गमभून्नृणाम् ॥ ३१ ॥

रुचिषु विलसन् फुल्लन् दृक्षु क्रियासु समुच्छलन्
भणितिषु लुठन् जृम्भास्वूद्यन्मुखेन्दुषु संगलन् ।
रतिषु निवसन्नङ्गे स्विद्यन्नदर्शि मृगीदृशां
मनसि विकसन्निष्टादिष्टोऽनुवृत्तिमहोत्सवः ॥ ३२ ॥

व्यसनमचलं यत्राचार्यो व्रतं विषयार्द्रता
सुहृदविनयो दासः प्रेम प्रभुर्मकरध्वजः ।
गृहमशिथिलाश्लेषः शय्या स्वरूपमभेदिता
रमणमिथुनान्यव्याख्येयां दशां विजगाहिरे ॥ ३३ ॥

कथमिव वयं के वा कस्मिन् विधावभवाम वा
किमुदितमदाः किं सोन्मादाः हताः शयिता मृताः ।
किमिव तदभूत्सौख्यं किं वा सुखेतरदित्यहो
सुरतविरतौ जज्ञुश्चिन्ताकृतोऽपि न कामिनः ॥ ३४ ॥

बलमकृतकं भूयान्वेषो विशुद्धिमदञ्जनं
सततसुरभिः कर्णोत्तंसः स्थिरस्थिति जीवितम् ।
अचरमतरं शृङ्गाराङ्गं प्रसाधनमत्त्ययं
प्रियचटुविधिः स्त्रीणामेकोऽप्यनेक इवाभवत् ॥ ३५ ॥

---

31a, M3 विधुतं for वियुतं, M2 अलघु for विनय
M तया for त्रपा
b, M कृशं for कृपं
32 of M is 31 in N; M3 omits.
a, M दृष्टि for दृक्षु
c, M विसरन् for निवसन्
d, M वृत्त for वृत्ति
34a, N किं for final वा
b, M किमु for मृताः
N breaks off at कृ of d कृतोपि up to XV 9 a.
d, M3 योगिनः for कामिनः

समभिलषिताश्लेषे पूर्वं ततो धृतसाध्वसे
चलदवयवे कान्तासङ्गात्ततो विहितत्रपे ।
निभृतचटुभिश्चेतोरूपैरथो विवृताशये
युवतिसुरते विश्रम्भार्द्रे ततर्प न वल्लभः ॥ ३६ ॥

फलमलघु किं लीलावल्ल्या गृहं नु गुणश्रिया-
ममृतमथवैकस्थं पिण्डीकृतं नु रसायनम् ।
निधिरुत रतेः सर्वस्वं नु स्मरस्य न वल्लभै-
रिति सुवदनाबिम्बोष्ठानां रसः परिचिच्छिदे ॥ ३७ ॥

क्षणमनिभृतं श्लायन्मानं क्षणं क्षणमुत्सुकं
क्षणमसुलभव्रीडं धीरं क्षणं क्षणमाकुलम् ।
ऋजुभिरशठास्तुष्टैस्तुष्टाः प्रकृष्टरता रतै-
र्विविशुरवशा वश्यैः पुम्भिः प्रियाः सरसां दशाम् ॥ ३८ ॥

चिरपरिचितश्रीशङ्कानां घनाञ्जनशोचिषां
श्रमजलपृथङ्नीता जह्रुः स्थितिष्वथ सङ्गिषु* ।
अलभत पदं निद्रामुद्रा वधूजनचक्षुषां
दलकुल इव श्यामाब्जानां शिलीमुखसंहतिः ॥ ३९ ॥

इत्थं ज्योत्स्नासमदमदिराक्षीविताासु क्षपासु
क्रीडाक्रोडीकृतमकृतकोत्कम्पमाश्लिष्टकण्ठाः ।
दम्पत्स्त्रैणं प्रसभमकुतोभीतयस्तेन निन्यु-
र्हृष्टान्ताभिः कुसुमधनुषाभीक्ष्णमक्ष्णा शिवेन* ॥ ४० ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये सुरतसम्भोगवर्णनो
नाम चतुर्दशः सर्गः ।

---

39, M3 omits.

विनयवियुतं यावद्यावत्त्रपापरिवर्जितं
कृशतरकृपं यावद्यावत्समाधिपराङ्मुखम् ।
धुतधृतिधुरं यावद्यावत्सुदीर्घमनोरथं
युवतिषु मुदे तावत्तावद्रताङ्गमभून्नृणाम् ॥ ३१ ॥

रुचिषु विलसन् फुल्लन् दृक्षु क्रियासु समुच्छलन्
भणितिषु लुठन् जृम्भासूद्यन्मुखेन्दुषु संगलन् ।
रतिषु निवसन्नङ्गे स्विद्यन्नदर्शि मृगीदृशां
मनसि विकसन्निष्टादिष्टोऽनुवृत्तिमहोत्सवः ॥ ३२ ॥

व्यसनमचलं यत्राचार्यो व्रतं विषयार्द्रता
सुहृदविनयो दासः प्रेम प्रभुर्मकरध्वजः ।
गृहमशिथिलाश्लेषः शय्या स्वरूपमभेदिता
रमणमिथुनान्यव्याख्येयां दशां विजगाहिरे ॥ ३३ ॥

कथमिव वयं के वा कस्मिन् विधावभवाम वा
किमुदितमदाः किं सोन्मादाः हताः शयिता मृताः ।
किमिव तदभूत्सौख्यं किं वा सुखेतरदित्यहो
सुरतविरतौ जज्ञुश्चिन्ताकृतोऽपि न कामिनः ॥ ३४ ॥

बलमकृतकं भूयान्वेषो विशुद्धिमदञ्जनं
सततसुरभिः कर्णोत्तंसः स्थिरस्थिति जीवितम् ।
अचरमतरं शृङ्गाराङ्गं प्रसाधनमत्ययं
प्रियचटुविधिः स्त्रीणामेकोऽप्यनेक इवाभवत् ॥ ३५ ॥

---

31a, M3 विधुतं for वियुतं, M2 अल्तु for विनय
M तया for त्रपा
b, M कृशं for कृपं
32 of M is 31 in N; M3 omits.
a, M दृष्टि for दृक्षु
c, M विसरन् for निवसन्
d, M वृत्त for वृत्ति
34a, N किं for final वा
b, M किमु for मृताः
N breaks off at कृ of d कृतोपि up to XV 9 a.
d, M3 योगिनः for कामिनः

समभिलषिताश्लेषे पूर्वं ततो धृतसाध्वसे
चलदवयवे कान्तासङ्गात्ततो विहितत्रपे ।
निभृतचटुभिश्चेतोरूपैरथो विवृताशये
युवतिसुरते विश्रम्भार्द्रे ततर्प न वल्लभः ॥ ३६ ॥

फलमलघु किं लीलावल्ल्या गृहं नु गुणश्रिया-
ममृतमथवैकस्थं पिण्डीकृतं नु रसायनम् ।
निधिरुत रतेः सर्वस्वं नु स्मरस्य न वल्लभै-
रिति सुवदनाबिम्बोष्ठानां रसः परिचिच्छिदे ॥ ३७ ॥

क्षणमनिभृतं श्लाघन्मानं क्षणं क्षणमुत्सुकं
क्षणमसुलभव्रीडं धीरं क्षणं क्षणमाकुलम् ।
ऋजुभिरशठास्तुष्टैस्तुष्टाः प्रकृष्टरता रतै-
र्विविशुरवशा वश्यैः पुम्भिः प्रियाः सरसां दशाम् ॥ ३८ ॥

चिरपरिचितश्रीशङ्कानां घनाञ्जनशोचिषां
श्रमजलपृथङ्नीता जह्रुः स्थितिष्वथ सङ्गिषु* ।
अलभत पदं निद्रामुद्रा वधूजनचक्षुषां
दलकुल इव श्यामाब्जानां शिलीमुखसंहतिः ॥ ३९ ॥

इत्थं ज्योत्स्नासमदमदिराचीविताासु क्षपासु
क्रीडाक्रोडीकृतमकृतकोत्कम्पमाश्लिष्टकण्ठाः ।
दम्पत्स्त्रैणं प्रसभमकुतोभीतयस्तेन निन्यु-
र्हृष्टान्ताभिः कुसुमधनुषाभीक्ष्णमक्ष्णा शिवेन* ॥ ४० ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये सुरतसम्भोगवर्णनो
नाम चतुर्दशः सर्गः ।

---

39,M3 omits.

विनयवियुतं यावद्यावत्त्रपापरिवर्जितं
कृशतरकृपं यावद्यावत्समाधिपराङ्मुखम् ।
धुतधृतिधुरं यावद्यावत्सुदीर्घमनोरथं
युवतिषु मुदे तावत्तावद्रताङ्गमभून्नृणाम् ॥ ३१ ॥

रुचिषु विलसन् फुल्लन् दृक्षु क्रियासु समुच्छलन्
भणितिषु लुठन् जृम्भास्वुद्यन्मुखेन्दुषु संगलन् ।
रतिषु निवसन्नङ्गे स्विद्यन्नदर्शि मृगीदृशां
मनसि विकसन्निष्टादिष्टोऽनुवृत्तिमहोत्सवः ॥ ३२ ॥

व्यसनमचलं यत्राचार्यो व्रतं विषयार्द्रता
सुहृदविनयो दासः प्रेम प्रभुर्मकरध्वजः ।
गृहमशिथिलाश्लेषः शय्या स्वरूपमभेदिता
रमणमिथुनान्यव्याख्येयां दशां विजगाहिरे ॥ ३३ ॥

कथमिव वयं के वा कस्मिन् विधावभवाम वा
किमुदितमदाः किं सोन्मादाः हताः शयिता मृताः ।
किमिव तदभूत्सौख्यं किं वा सुखेतरदित्यहो
सुरतविरतौ जज्ञुश्चिन्ताकृतोऽपि न कामिनः ॥ ३४ ॥

बलमकृतकं भूयान्वेषो विशुद्धिमदञ्जनं
सततसुरभिः कर्णोत्तंसः स्थिरस्थिति जीवितम् ।
अचरमतरं शृङ्गाराङ्गं प्रसाधनमव्ययं
प्रियचटुविधिः स्त्रीणामेकोऽप्यनेक इवाभवत् ॥ ३५ ॥

---

31a,M3 विधुतं for वियुतं, M2 अलघु for विनय
M तया for त्रपा
b,M कृशं for कृपं
32 of M is 31 in N; M3 omits.
a,M दृष्टि for दृक्षु
c,M विसरन् for निवसन्
d,M वृत्त for वृत्ति
34a,N किं for final वा
b,M किमु for मृताः
N breaks off at कृ of d कृतोपि up to XV 9 a.
d,M3 योगिनः for कामिनः

समभिलषिताश्लेषे पूर्वं ततो धृतसाध्वसे
चलदवयवे कान्तासङ्गात्ततो विहितत्रपे ।
निभृतचटुभिश्चेतोरूपैरथो विवृताशये
युवतिसुरते विश्रम्भार्द्रे ततर्प न वल्लभः ॥ ३६ ॥

फलमलघु किं लीलावल्ल्या गृहं नु गुणश्रिया-
ममृतमथवैकस्थं पिण्डीकृतं नु रसायनम् ।
निधिरुत रतेः सर्वस्वं नु स्मरस्य न वल्लभै-
रिति सुवदनाबिम्बोष्ठानां रसः परिचिच्छिदे ॥ ३७ ॥

क्षणमनिभृतं श्लाघन्मानं क्षणं क्षणमुत्सुकं
क्षणमसुलभव्रीडं धीरं क्षणं क्षणमाकुलम् ।
ऋजुभिरशठास्तुष्टैस्तुष्टाः प्रकृष्टरता रतै-
र्विविशुरवशा वश्यैः पुम्भिः प्रियाः सरसां दशाम् ॥ ३८ ॥

चिरपरिचितश्रीशङ्कानां घनाञ्जनशोचिषां
श्रमजलपृथङ्नीता जह्नुः स्थितिष्वथ सङ्गिषु* ।
अलभत पदं निद्रामुद्रा वधूजनचक्षुषां
दलकुल इव श्यामाब्जानां शिलीमुखसंहतिः ॥ ३९ ॥

इत्थं ज्योत्स्नासमदमदिराक्षीबितासु क्षपासु
क्रीडाक्रोडीकृतमकृतकोत्कम्पमाश्लिष्टकण्ठाः ।
दम्पत्स्त्रैणं प्रसभमकुतोभीतयस्तेन निन्यु-
र्हृष्टान्ताभिः कुसुमधनुषाभीक्ष्णमक्ष्णा शिवेन* ॥ ४० ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये सुरतसम्भोगवर्णनो
नाम चतुर्दशः सर्गः ।

---

39, M3 omits.

विनयवियुतं यावद्यावत्त्रपापरिवर्जितं
कृशतरकृपं यावद्यावत्समाधिपराङ्मुखम् ।
धुतधृतिधुरं यावद्यावत्सुदीर्घमनोरथं
युवतिषु मुदे तावत्तावद्रताङ्गमभून्नृणाम् ॥ ३१ ॥

रुचिषु विलसन् फुल्लन् दक्षु क्रियासु समुच्छलन्
भणितिषु लुठन् जृम्भासूद्यन्मुखेन्दुषु संगलन् ।
रतिषु निवसन्नङ्गे स्विद्यन्नदर्शि मृगीदृशां
मनसि विकसन्निष्टादिष्टोऽनुवृत्तिमहोत्सवः ॥ ३२ ॥

व्यसनमचलं यत्राचार्यो व्रतं विषयार्द्रता
सुहृदविनयो दासः प्रेम प्रभुर्मकरध्वजः ।
गृहमशिथिलाश्लेषः शय्या स्वरूपमभेदिता
रमणमिथुनान्यव्याख्येयां दशां विजगाहिरे ॥ ३३ ॥

कथमिव वयं के वा कस्मिन् विधावभवाम वा
किमुदितमदाः किं सोन्मादाः हताः शयिता मृताः ।
किमिव तदभूत्सौख्यं किं वा सुखेतरदित्यहो
सुरतविरतौ जज्ञुश्चिन्ताकृतोऽपि न कामिनः ॥ ३४ ॥

बलमकृतकं भूयान्वेषो विशुद्धिमदञ्जनं
सततसुरभिः कर्णोत्तंसः स्थिरस्थिति जीवितम् ।
अचरमतरं शृङ्गाराङ्गं प्रसाधनमव्ययं
प्रियचटुविधिः स्त्रीणामेकोऽप्यनेक इवाभवत् ॥ ३५ ॥

---

31a,M3 विधुतं for वियुतं, M2 अलघु for विनय
M तया for त्रपा
b,M कृशं for कृपं
32 of M is 31 in N; M3 omits.
a,M दृष्टि for दृक्षु
c,M विसरन् for निवसन्
d,M वृत्त for वृत्ति
34a,N किं for final वा
b,M किमु for मृताः
N breaks off at कृ of d कृतोपि up to XV 9 a.
d,M3 योगिनः for कामिनः

समभिलषिताश्लेषे पूर्वं ततो धृतसाध्वसे
चलदवयवे कान्तासङ्गात्ततो विहितत्रपे ।
निभृतचटुभिश्चेतोरूपैरथो विवृताशये
युवतिसुरते विश्रम्भार्द्रे ततर्प न वल्लभः ॥ ३६ ॥

फलमलघु किं लीलावल्ल्या गृहं नु गुणश्रिया-
ममृतमथवैकस्थं पिण्डीकृतं नु रसायनम् ।
निधिरुत रतेः सर्वस्वं नु स्मरस्य न वल्लभै-
रिति सुवदनाबिम्बोष्ठानां रसः परिचिच्छिदे ॥ ३७ ॥

क्षणमनिभृतं श्लायन्मानं क्षणं क्षणमुत्सुकं
क्षणमसुलभव्रीडं धीरं क्षणं क्षणमाकुलम् ।
ऋजुभिरशठास्तुष्टैस्तुष्टाः प्रकृष्टरता रतै-
र्विविशुरवशा वश्यैः पुम्भिः प्रियाः सरसां दशाम् ॥ ३८ ॥

चिरपरिचितश्रीशङ्कानां घनाञ्जनशोचिषां
श्रमजलपृथङ्नीता जह्नुः स्थितिष्वथ सङ्गिषु* ।
अलभत पदं निद्रामुद्रा वधूजनचक्षुषां
दलकुल इव श्यामाब्जानां शिलीमुखसंहतिः ॥ ३९ ॥

इत्थं ज्योत्स्नासमदमदिराक्षीविताासु क्षपासु
क्रीडाक्रोडीकृतमकृतकोत्कम्पमाश्लिष्टकण्ठाः ।
दृप्यत्स्त्रैणं प्रसभमकुतोभीतयस्तेन निन्यु-
र्हृष्टान्ताभिः कुसुमधनुषाभीक्ष्णमक्ष्णा शिवेन* ॥ ४० ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये सुरतसम्भोगवर्णनो
नाम चतुर्दशः सर्गः ।

---

39,M3 omits.

## पञ्चदशः सर्गः

गायं गायं निरवधि वधूसौधसेनामधोऽधः
कामक्रीडाकुसुमकलिकाकुड्मलीभावमूलम् ।
इत्थंकारं जनितरजनीज्यानिसाकल्यकल्याः
कल्यं भर्त्रे द्रुतमचकथन् वन्दिनो वन्दनाभिः ॥ १ ॥

गर्जाजातं जनितजरठावेशमाणा(शा)* यथेदं
प्रातः प्रातः प्रहतमुरजामेघमेघौघमुक्तम्* ।
सद्यः संस्थां निरसिसिषते येन नैभृत्यलीना
निद्राहंसी नलिननयना नेत्रनीलाब्जपुञ्जे ॥ २ ॥

कारं कारं निधुवनविधीनुल्लसत्कान्ति कृच्छ्रा-
दाद्रां निद्रामधिगतवतां रागभाजां कथञ्चित् ।
दुःखं दत्ते वदनपवनापूरितः कल्यकम्बुः
शुद्धोऽपूतैर्भवति चपलैर्दूरलब्धान्तरः सन्* ॥ ३ ॥

धातः पश्य प्रतिमतमसो* मिश्ररागोद्गमस्य
श्लिष्यद्दृष्टेरभिमतमुखे सौधवातायने च ।
शश्वच्छङ्काशिथलितभुजालिङ्गनस्योज्झिहीते
कोऽपि स्वादोऽभिसरणवधूचूर्णरम्योत्सवस्य ॥ ४ ॥

2,M गर्भाजातं for गर्जाजातं; यखेदं for यथेदं 4,M3 omits.

अत्यौत्सुक्यात्परवशदृशो यामनिर्वर्णिताङ्ग्याः
प्रापुः स्नेहेऽप्यविदितरसस्वादनां पूर्वरात्रे ।
तामन्योन्यावयवविचरद्दृष्टि सुप्तप्रबुद्धाः
कामक्रीडाद्द्विगुणितरसां कामुका निर्विशन्ति ॥ ५ ॥
स्रस्तस्वापांस्तुदति विरुते ताम्रचूडस्य चेत-
स्ताराराागान्तरपरिगमाशङ्कनेनाभिसर्त्र्यः ।
कोषं बिम्बाधररसमयं धैर्यतोयालवालं
भूयो भूयः प्रतिगमविधौ प्रेयसः पाययन्ते ॥ ६ ॥
अप्याविष्टश्चटुषु युवतेर्नात्मकण्ठातिथित्वं
यद्दोर्वल्लीवलयमशकन्नेतुमार्द्रापराधः ।
निन्ये रन्तुस्तदुषसि कलं कम्बुना कूजतोच्चै-
रन्तःशून्यादपि हि सुमुखे वेधसि स्यात्फलश्रीः ॥ ७ ॥
जृम्भारम्भे विवलितभुजास्फालिता या च तन्व्या
या च ध्माता ध्वनति रजनेरत्यये कम्बुपङ्क्तिः ।
रन्तुश्चेतो व्यथयति तयोः पूर्विका नोत्तरावत्
सायूथ्येऽपि प्रभवति रुजे कः सुवृत्तोपसेवी ॥ ८ ॥
निद्राशेषारुणजडदृशोऽध्यास्य तल्पापरान्तं
प्राक् संबुद्धाः सुरतसुहृदामङ्कमारोप्य पादान् ।
खेलप्रेङ्खत्सवलयभुजावल्लि संवाहयन्ति
प्रातः प्रेमश्रिय इव गृहे विग्रहिण्यो गृहिण्यः ॥ ९ ॥
लब्ध्वा बोधं दिवसकरिणः कीर्णनक्षत्रमालं
दीर्घादस्माद् गगनशयानादुज्जिहानस्य दर्पात् ।

---

6c,M3 धैर्यतोऽप्यालवालम् for the reading given above
d,M3 प्रापयन्ते for पाययन्ते

8,M3 omits.
9,N begins with दृशो of 9a, after the break beginning with XIV, 33

## पञ्चदशः सर्गः

गायं गायं निरवधि वधूसौधसेनामधोऽधः
कामक्रीडाकुसुमकलिकाकुड्मलीभावमूलम् ।
इत्थंकारं जनितरजनीज्यानिसाकल्यकल्याः
कल्यं भर्त्रे द्रुतमचकथन् वन्दिनो वन्दनाभिः ॥ १ ॥

गर्जाजातं जनितजरठावेशमाणा(शा)* यथेदं
प्रातः प्रातः प्रहतमुरजामेघमेघौघमुक्तम्* ।
सद्यः संस्थां निरसिसिषते येन नैभृत्यलीना
निद्राहंसी नलिननयना नेत्रनीलाब्जपुञ्जे ॥ २ ॥

कारं कारं निधुवनविधीनुल्लसत्कान्ति कृच्छ्रा-
दार्द्रां निद्रामधिगतवतां रागभाजां कथञ्चित् ।
दुःखं दत्ते वदनपवनापूरितः कल्यकम्बुः
शुद्धोऽपूतैर्भवति चपलैर्दूरलब्धान्तरः सन्* ॥ ३ ॥

धातः पश्य प्रतिमतमसो* मिश्ररागोद्गमस्य
श्लिष्यद्दृष्टेरभिमतमुखे सौधवातायने च ।
शश्वच्छङ्काशिथलितभुजालिङ्गनस्योज्जिहीते
कोऽपि स्वादोऽभिसरणवधूचूर्णरम्योत्सवस्य ॥ ४ ॥

2,M गर्भाजातं for गर्जाजातं; यखेदं for यथेदं 4,M3 omits.

अत्यौत्सुक्यात्परवशदृशो यामनिर्वर्णिताङ्ग्याः
प्रापुः स्नेहेऽप्यविदितरसस्वादनां पूर्वरात्रे ।
तामन्योन्यावयवविचरद्दृष्टि सुप्तप्रबुद्धाः
कामक्रीडाद्विगुणितरसां कामुका निर्विशन्ति ॥ ५ ॥
स्रस्तस्वापांस्तुदति विरुते ताम्रचूडस्य चेत-
स्तारारागान्तरपरिगमाशङ्कनेनाभिसर्त्र्यः ।
कोषं बिम्बाधररसमयं धैर्यतोयालवालं
भूयो भूयः प्रतिगमविधौ प्रेयसः पाययन्ते ॥ ६ ॥
अप्याविष्टश्वद्रुषु युवतेर्नात्मकण्ठातिथित्वं
यद्दोर्वल्लीवलयमशकन्नेतुमार्द्रापराधः ।
निन्ये रन्तुस्तदुषसि कलं कम्बुना कूजतोच्चै-
रन्तःशून्यादपि हि सुमुखे वेधसि स्यात्फलश्रीः ॥ ७ ॥
जृम्भारम्भे विचलितभुजास्फालिता या च तन्व्या
या च ध्माता ध्वनति रजनेरत्यये कम्बुपङ्क्तिः ।
रन्तुश्चेतो व्यथयति तयोः पूर्विका नोत्तरावत्
सायूथ्येऽपि प्रभवति रुजे कः सुवृत्तोपसेवी ॥ ८ ॥
निद्राशेषारुणजडदृशोऽध्यास्य तल्पापरान्तं
प्राक् संबुद्धाः सुरतसुहृदामङ्कमारोप्य पादान् ।
खेलप्रेङ्खत्सवलयभुजावल्लि संवाहयन्ति
प्रातः प्रेमश्रिय इव गृहे विग्रहिण्यो गृहिण्यः ॥ ९ ॥
लब्ध्वा बोधं दिवसकरिणः कीर्णनक्षत्रमालं
दीर्घादस्माद् गगनशयानादुज्जिहानस्य दर्पात् ।

---

6c,M3 धैर्यतोऽप्यालवालम् for the reading given above
d,M3 प्रापयन्ते for पाययन्ते

8,M3 omits.
9,N begins with दृशो of 9a, after the break beginning with XIV, 33

मज्जद्दानोदकमलिनितो जर्जराभीषुरज्जुः
अश्यत्येष प्रशिथिल इव श्रोत्रशङ्खः शशाङ्कः ॥ १० ॥
आलोकेनातनुतमतमोमोषकेणाप्यमूषां
नैवास्ताभिर्जित उरुदशां विप्रयोगान्धकारः ।
इत्थं बिभ्रत्यवनतशिखैरात्मभिर्दह्यमाना
व्रीडावेशादिव रतिगृहे पाण्डिमानं प्रदीपाः ॥ ११ ॥
ज्योत्स्नाजालान्वयिकरकुलं गौरवस्यैकमोको
ज्योतिश्चक्रं परिचितममूमङ्गलग्नां निशां च ।
सन्त्यज्येन्दुः प्रवसति जवाल्लाघवं दूरमाप्तः
पान्थैः पन्था न हि न सुगमोऽनूढभूयिष्ठभारैः ॥ १२ ॥
रागिक्रीडामलितकुसुमामोदधूपाङ्गरागा-
श्लेषश्लाघ्यं परिमलमलं कृत्स्नमादित्सतेव ।
अभ्यावेष्टुं रतिगृहगुहां गन्धवाहेन कल्यं
प्रेर्यन्तेऽमी परमररयो हर्म्यवातायतानाम् ॥ १३ ॥
तल्पत्यागावसरविधुता दूरमैरावणाङ्गा-
दुत्सर्पन्ती दिवसपवनैर्धूतधूलिच्छटेव ।
दीर्घीकृत्योदयगिरिशिरःश्रेणिसीमन्तलेखां
प्राह्णालोके छविरथ दिशि व्यज्यते वासवस्य ॥ १४ ॥
आनन्दाश्रुप्रसरसरसैरीक्षितैश्चक्रनाम्ना-
मभ्यावृत्तिप्रगुणनिहितैर्धौतधौतान्तिकेव ।

---

10b,M गमन for गगन
c,Nसज्जद्दानोदकतुल्मलो for मज्जद्दानोदकमलिनितो
11d,N वेग for वेश
12b,M अङ्क for अङ्ग
d,M दूर for नूढ
13bN असत्कुत्समादित्सुनेव for the above
14,M3 omits; b,N भूतधूलिच्छदेव for the above
c,N दीर्घी कृत्वा for दीर्घीकृत्य

आविर्भाविप्रणयिदिवसालोकलिप्ता मलौघै-
मेंघैर्दूरं दिगमरपतेस्तामसैस्त्यज्यतेऽसौ ॥ १५ ॥
लीलोदस्तारुणकरपरामर्शवत्तारकान्ता
व्यात्तेनाह्नः श्वसनसुरभिश्वासभाजा मुखेन ।
भास्वत्पादप्रसरणसमातन्यमानाम्बरेयं
प्रातस्तूर्यैरिवखगरुतैर्जृम्भते वासरश्रीः ॥ १६ ॥
यावद्यावद्युवतिवलितोत्सङ्गविद्याधराङ्ग-
क्रीडाक्लृप्तश्रमशमसुखाः स्वर्गवाता वहन्ति ।
तावत्तावत्तरलतरलं तारकाचक्रमेति
क्लान्तिं वृन्तश्लथमिव परिभ्रंशि फुल्लं द्युवल्ल्याः ॥ १७ ॥
प्राचीश्वासोपममरुदधिप्राच्यशैलाश्मशय्यं
संप्राप्तायां दिवि नवनवां वासरस्य प्रसूतिम् ।
आविर्भावो भवति रुधिरासारमिश्रस्य सद्यः
साक्रन्दन्यां ककुभि कललस्येव सन्ध्यातपस्य ॥ १८ ॥
दैन्यं दैवादुपकृतिकृति क्लान्तिकीर्णेऽवतीर्णे
नाश्वासाय प्रकृतिमहतामाशयो नोज्जिहीते ।
यत्तेजोभिस्तरलिततमोविप्लवैः प्लावितोर्मे-
रिन्दोरङ्कं दिशति पततो निश्चयात् पश्चिमाब्धिः ॥ १९ ॥
आशावल्लीकिसलयततिर्व्योमनीलाभ्रविद्युत्
प्राच्याद्रीन्द्रद्विपपतिशिरश्चीनपिष्टातवृष्टिः ।

---

15c,N भाव for भावि
16d,M तूर्णं for तूर्यैः
17a,M वल्य for वलित
18a,M शय्यां for शय्यं
b,N कुर्वाणायां for संप्राप्तायां
19,M3 omits;
d,M विशति for दिशति; M पतितः for पततः
M पश्चिमात्यः for पश्चिमाब्धिः

मज्जद्दानोदकमलिनितो जर्जराभीषुरज्जुः
अश्यत्येष प्रशिथिल इव श्रोत्रशङ्खः शशाङ्कः ॥ १० ॥
आलोकेनातनुतमतमोमोषकेणाप्यमूषां
नैवासाभिर्जित उरुदृशां विप्रयोगान्धकारः ।
इत्थं विभ्रत्यवनतशिखैरात्मभिर्दह्यमाना
व्रीडावेशादिव रतिगृहे पाण्डिमानं प्रदीपाः ॥ ११ ॥
ज्योत्स्नाजालान्वयिकरकुलं गौरवस्यैकमोको
ज्योतिश्चक्रं परिचितममूमङ्गलघ्नां निशां च ।
सन्त्यज्येन्दुः प्रवसति जवाल्लाघवं दूरमाप्तः
पान्थैः पन्था न हि न सुगमोऽनूढभूयिष्ठभारैः ॥ १२ ॥
रागिक्रीडामलितकुसुमामोदधूपाङ्गरागा-
श्लेषश्लाघ्यं परिमलमलं कृत्स्नमादित्सतेव ।
अभ्यावेष्टुं रतिगृहगुहां गन्धवाहेन कल्यं
प्रेर्यन्तेऽमी परमररयो हर्म्यवातायतानाम् ॥ १३ ॥
तल्पत्यागावसरविधुता दूरमैरावणाङ्गा-
दुत्सर्पन्ती दिवसपवनैर्धूतधूलिच्छटेव ।
दीर्घीकृत्योदयगिरिशिरःश्रेणिसीमन्तलेखां
प्राग्भालोके छविरथ दिशि व्यज्यते वासवस्य ॥ १४ ॥
आनन्दाश्रुप्रसरसरसैरीक्षितैश्चक्रनाम्ना-
मभ्यावृत्तिप्रगुणनिहितैर्धौतधौतान्तिकेव ।

---

10b,M गमन for गगन
c,N सज्जद्दानोदकतुल्मलो for मज्जद्दानोदकमलिनितो
11d,N वेग for वेश
12b,M अङ्क for अङ्ग
d,M दूर for नूढ
13bN असत्कुत्समादित्सुनेव for the above
14,M3 omits; b,N भूतधूलिच्छदेव for the above
c,N दीर्घी कृत्वा for दीर्घीकृत्य

आविर्भाविप्रणयिदिवसालोकलिप्ता मलौघै-
मेंघैर्दूरं दिगमरपतेस्तामसैस्त्यज्यतेऽसौ ॥ १५ ॥
लीलोदस्तारुणकरपरामर्शवत्तारकान्ता
व्यात्तेनाह्नः श्वसनसुरभिश्वासभाजा मुखेन ।
भास्वत्पादप्रसरणसमातन्यमानाम्बरेयं
प्रातस्तूर्यैरविखगरुतैर्जृम्भते वासरश्रीः ॥ १६ ॥
यावद्यावद्युवतिवलितोत्सङ्गविद्याधराङ्ग-
क्रीडाक्लृप्तश्रमशमसुखाः स्वर्गवाता वहन्ति ।
तावत्तावत्तरलतरलं तारकाचक्रमेति
क्लान्तिं वृन्तश्लथमिव परिभ्रंशि फुल्लं द्युवल्ल्याः ॥ १७ ॥
प्राचीश्वासोपममरुदधिप्राच्यशैलाश्मशय्यं
संप्राप्तायां दिवि नवनवां वासरस्य प्रसूतिम् ।
आविर्भावो भवति रुधिरासारमिश्रस्य सद्यः
साक्रन्दन्यां ककुभि कललस्येव सन्ध्यातपस्य ॥ १८ ॥
दैन्यं दैवादुपकृतिकृति क्लान्तिकीर्णेऽवतीर्णे
नाश्वासाय प्रकृतिमहतामाशयो नोज्झिहीते ।
यत्तेजोभिस्तरलिततमोविप्लवैः प्लावितोर्मे-
रिन्दोरङ्कं दिशति पततो निश्चयात् पश्चिमाब्धिः ॥ १९ ॥
आशावल्लीकिसलयततिर्व्योमनीलाभ्रविद्युत्
प्राच्याद्रीन्द्रद्विपपतिशिरश्चीनपिष्टातवृष्टिः ।

---

15c,N भाव for भावि
16d,M तूर्णं for तूर्यैः
17a,M वल्य for वलित
18a,M शय्यां for शय्यं
b,N कुर्वाणायां for संप्राप्तायां
19,M3 omits;
d,M विशति for दिशति; M पतितः for पततः
M पश्चिमात्यः for पश्चिमाब्धिः

ध्वान्तच्छायातपरुचिरहःकालकालाहिजिह्वा
राजत्येषा घनकषदृषत्स्वर्णलेखाग्रसन्ध्या ॥ २० ॥

शोकं कोकाः कुमुदमलयश्चन्द्रपादा दिगन्तान्
दीपा वर्तीरभिमतभुजाभ्यन्तरं चाभिसर्त्र्यः ।
ज्योत्स्नां काष्ठा निषदनमिभा बर्हिणो वासयष्टी-
र्व्योमोपान्तांस्तिमिरपटली तुल्यमेव त्यजन्ति ॥ २१ ॥

वारं वारं गलितकुसुमामोदसंमर्दमिश्रं
पीत्वा पीत्वा मधुपरिमलं वासगेहेषु वायुः ।
क्षीबक्षीबः क्षणमथ मृगप्रेक्षणानामतृप्यन्
भूयो भूयः सुरभिषु लुठत्युन्नतेषु स्तनेषु ॥ २२ ॥

आनीतस्यावतमसमलैर्मांसलैर्विप्रलम्भं
ज्योत्स्नाजाले जल इव शुचिन्यादितो मज्जयित्वा ।
काष्ठासङ्गज्वलनत इव क्वाथ्यमानं कषायं
सन्ध्यारागं दिवसरजकः कल्पयत्यम्बरस्य ॥ २३ ॥

आवश्यायातिशयशिशिरैराप्लुतास्तीर्थतोयै-
र्युक्ता मुक्तामलजलजलकणस्यन्दिनीभिः शिखाभिः ।
हस्तैर्होमोपकरणसमित्पुष्पबर्हिर्विहस्तै-
र्विप्रा देवा इव सवपुषो वह्निशालां विशन्ति ॥ २४ ॥

पूष्णा नक्तं निहितमहसश्चित्यचित्रार्चिषोऽमी
पीत्वा पीत्वा विधिहुतमुपासन्नसान्नाय्यमाज्यम् ।
तेजःप्रत्यर्पणमिव पुरः संविधातुं खरांशो-
रारोहन्ति ज्वलदुरुशिखाश्रेणिनिःश्रेणिभिर्द्याम् ॥ २५ ॥

---

20a,M वर्ती for वह्नी; N लीला for नीला
b,N पिष्टामि for पिष्टात
21c,N जैह्म्यं for ज्योत्स्नां
22a,M सन्दर्भ for संमर्द
23b,M आर्द्रतामर्जयित्वा for आदितो मज्जयित्वा

गोपीहस्तैः स्तनमुखरसश्लेषितच्याविताख्या-
स्तर्षादूधःस्नुतिरुतिमथोत्कर्णमाकर्णयन्तः ।
गोभिर्लीढाजठरककुदः संप्रतीक्षन्त एते
घोणास्वादोल्लसितरसनास्तर्णका दोहनिष्ठाम् ॥ २६ ॥

नेत्राकृष्टिव्यतिकरवलद्दण्डदष्टाङ्गुलीनां
चक्रोच्छोटोच्छलितकलशीशीकरार्द्राम्बराणाम् ।
भुग्नाभुग्नभ्रमितजलताभङ्गिभिन्नस्तनीनां
मन्थे कुन्थद्ध्वनि हरते वेल्लितं वल्लवीनाम् ॥ २७ ॥

हीनाङ्गानामपि हि नियताऽऽसेविनां नूनमादौ
व्यञ्जन्त्येव श्रियमलघवः स्वामुपेक्ष्यापि लक्ष्मीम् ।
नीतः पूष्णा यदयमुदयं स्वोदयात्पूर्वमेव
प्राप्तस्तेजोभुवनभवनापूरि दूरादनूरुः ॥ २८ ॥

यावद्यावल्ललितरचनाचारु चङ्क्रम्यतेऽसौ
सीम्नि व्योम्नः शितिमणिशिलाकुट्टिमाभे दिनश्रीः ।
तावत्तावत्तरुणतपनाऽऽताम्रिताभ्रच्छलेन
द्रागार्द्रार्द्रं पतति चरणालक्तकच्छायमस्याः ॥ २९ ॥

अम्भोजेषु श्लथदलविशन्नैशतोयांशशीत-
स्पर्शभ्रश्यत्स्वपनमलिनां हुंकृतं श्रूयतेऽन्तः ।
प्रेङ्खत्पादप्रसरणविधि प्रस्तुवत्याः प्रबोधं
मञ्जीराणामिव रुणरुणाशिञ्जितं मञ्जु लक्ष्म्याः ॥ ३० ॥

---

26a,M सुख for मुख; M श्लेषितैराततास्याः for श्लेषितच्याविताख्याः
b,N क्षीर for ऊधः
27a,M चलद् for वलद्
b,M वक्राक्षेपो for चक्राच्छोटो, M3 ०क्ष्वेट
cd, missing in M
28ab, missing in M
c,N उदयत् for उदयं
d,M प्राप्तात् for प्राप्तः; N भुवनरचनासुरि for भुवनभवनापूरि
29c,M ताम्र for ताप; it may be ताभ्र
d,M प्राप for द्राक्; पतित for पतति
30b,N झंकृतं for हुंकृतं

अङ्के स्त्रीभिः प्रियपरिमलाशङ्कया श्लाघितश्रीः
किञ्जल्काशाश्रयिभिरलिभिः संघशः संगतौघः ।
क्षीबक्षीबैः स्थितमधुधिया रुक्मपारीषु दृष्टः
कल्यं कालीयककपिलिमाभ्येति बालातपोऽयम् ॥ ३१ ॥

तेजोराशौ भुवनजलधेः प्लाविताशातटान्तं
भानौ कुम्भोद्भव इव पिबत्यन्धकारोत्कराम्भः ।
सद्यो माद्यन्मकरकमठस्थूलमत्स्या इवैते
यान्त्यन्तःस्थाः कुलशिखरिणो दृष्टिवर्त्म क्रमेण ॥ ३२ ॥

ध्वान्तं धाम्ना धवितुमवितुं लोकमालोकलक्ष्म्या
प्राप्तस्याहर्वहति शिरसा भास्करस्यैष पादान् ।
प्रायस्तुङ्गप्रकृतिभिरिह श्लाघनीयोद्यमेभ्यः
सत्कारार्थव्यतिकरभुवि व्यज्यते गौरवं हि ॥ ३३ ॥

प्रत्यक्पादप्रकटकटकिन्यासपूर्वव्युदस्त-
प्राच्यप्राञ्चच्चरणनटनोत्तानितामन्दतुन्दाः ।
आरोहन्ति श्लथदलचलच्चामरैः कन्धराग्रैः
फेनच्छायाच्छुरितहरितो हारिदश्वाः खमश्वाः ॥ ३४ ॥

सन्ध्याध्यानप्रगुणितजपैर्मन्त्रवादिप्रधानै-
र्दृष्टामृष्टे गगनमुकुरे सूत्रकृत्यावतारम् ।
नष्टानष्टान् झगिति जगतो लम्भयन्ती पदार्था-
नेषा तोषं दिशतु मनसः पूषमूर्त्तिः प्रसन्ना ॥ ३५ ॥

---

31a,M हंहो for अङ्के
c,M M भव्य for रुक्म; d,M तालीफल for कालीयक
32 Not found in M
Quoted in Skm. ii, 713; N अन्तःस्थाः Skm. अन्तस्थाः; N कुलशिखरिणो Skm. कुलशिखरिणी
d,N व्यक्ति, Skm. has सृष्टि for दृष्टि
33,M omits; found in N
34a,M प्रत्यक्ष for प्रत्यक्पाद
M कुन्दाः for तुन्दाः
35c,M जपति for झगिति; M लङ्घयन्ती for लम्भयन्ती
d,M दिशति for दिशतु

शैलेष्वर्कोपलतलललद्वह्नितल्पस्थलेषु
स्थित्वा स्थित्वा तत इव ततं संगतैः प्लोषदोषम् ।
आश्वासाय स्फुटमिव शनैः शीतले पद्मखण्डे
संप्रत्येतैरवतरविधिः साध्यते सूर्यपादैः ॥ ३६ ॥

आमृद्नन्तस्तम इव सरस्सीम्नि सम्भूय पङ्कं
तारासार्थैरिव प्रतिभुवा फेनकैः श्लिष्टपादाः ।
भ्रान्त्यादष्टस्फुटबिसलताचुञ्चुभिश्चञ्चुचक्रै-
श्चक्रा वन्दीकृतविरहकृच्चन्द्रलेखा इवैते ॥ ३७ ॥

वृत्ते पत्युः प्रवसनविधौ रात्रिराजः कलत्रं
क्लान्तक्लान्तामभिकुमुदिनीं मन्थरं तस्थिवांसः ।
तत्किञ्जल्कप्रसरधवला बिभ्रतीह द्विरेफा-
श्चिन्ताजिह्मस्थितपलितवत्कञ्चुकिच्छायमेते ॥ ३८ ॥

स्वच्छायातर्जितेन्दुद्युति निखिलजनानन्दसंधानबन्धु
लक्ष्मीसारं शिरःसु स्थितमवनिभृताम्रुह्यमानं समूहैः ।
उत्खाताशेषदोषं सह तव यशसा लब्धदिक्चक्रचर्यं
स्तान्धास्वन्मण्डलाग्रस्फुरितकृतमदः सुप्रभातं सुखाय ॥ ३९ ॥

इति गिरमुपकर्ण्य मागधीयां श्लथशयनः सुहृदो गृहेऽभिरत्य ।
स्वपुरमथ शिवं प्रतीपमेत्य क्षितिपतिरास्त तदा कृतप्रतीक्षः ॥ ४० ॥

इति श्रीकम्फिणाभ्युदये महाकाव्ये प्रभातवर्णनो
नाम पञ्चदशः सर्गः

---

36,M omits; found in N.
37,M omits; found in N.
38,M omits; found in N.
39a,M स्वच्छः प्रातः for स्वच्छायात०
M ०नं दान for संधान
40c,N इव for अथ
colophon: M प्रदोष for प्रभात

# षोडशः सर्गः

अथोत्साहवतेव श्रीः प्रतीतिः कविनेव च ।
दर्शकेन पुरी प्रापि प्रसेनजिदधिष्ठिता ॥ १ ॥
दानदादीनदानाम्बुविमर्दोद्दामकर्दमे ।
नैकपादपि चस्खाल चित्रं धर्मो यदन्तरे ॥ २ ॥
समस्तम्भा वयन्त्यः खं सद्वाराः सालकाननाः ।
या बभार वलीकान्तकायाः शाला वधूरिव ॥ ३ ॥
इष्टान्मुदा हविर्धारादुर्दिने याति यत्पथे ।
यज्ञधूमासितपटा मोक्तलक्ष्म्यभिसारिका ॥ ४ ॥
विबुधैरप्सरोभिश्च शतक्रतुपरीतया ।
भूदर्पणेऽमरावत्याः प्रतिबिम्बायितं यया ॥ ५ ॥
सन्ध्याख्यमधुनामीन्दुर्यत्र कुट्टिमसंक्रमात् ।
लग्नं धत्ते चलच्चारुस्त्रीपादालक्तकद्रवम् ॥ ६ ॥

---

2c,M3 पप्फाल for चस्खाल; d,N चरन् for चित्रं
3a,M वयन्त्यश्च for वयन्त्यः खं; b,M सद्धारा श्यामलाननाः for सद्वाराः सालकाननाः; d,N ०च्छायाः for कायाः
4a,M इष्टाम्मुदा for इष्टान्मुदा
6a,M ०कामीन्दु for नापीन्दु
c,N लग्नां for लग्नं; d,N ०च्छविम् for द्रवम; M3 च्छलम्

न विनायकविक्रान्ता न दुर्गाननरोचिता ।
ईश्वरायतनत्वेऽपि न कुमारवृता च या ॥ ७ ॥
या चक्रेऽर्कांशुसंपर्कज्वलद्दल्वर्कपादपैः ।
रत्नसालैर्द्युषद्घोषजुषां नीराजनं दिशाम् ॥ ८ ॥
आर्यलोकोऽर्कभासश्च यत्र तुल्यं महातपाः ।
भूमिभागोऽथ कवयः समया सन्धिमत्सराः* ॥ ९ ॥
कलेः पलायमानस्य तापितस्य मखाग्निभिः ।
तोदनैरिव या यूपैर्ददौ दिशि दिशि व्यथाम् ॥ १० ॥
रेजे विहारविच्छित्तिः सुगतानुग्रहासिता ।
सर्वतश्चैत्यया मूर्त्या मोक्षवल्लभमाश्रिता ॥ ११ ॥
स तां सतां संमतात्मा परीत्य पुरुधीः पुरीम् ।
जगाहेऽविरलां राजद्वारं दूतो जितद्विषः ॥ १२ ॥
अन्तर्विश्य विशां पत्ये विदितो वदतां वरः ।
सभासंभावनां सत्यां सत्यः सत्यं समाददे ॥ १३ ॥
स रेजे राजके सज्जे नृपस्येन्दोरिवान्तिके ।
तेजसा तारतारेण ताराराशाविवोशनाः ॥ १४ ॥
तं ततः सन्ततस्यन्दिसान्द्रचन्द्रकचन्द्ररुक् ।
ऊचेऽञ्चितस्मितो दीप्तदीप्रसेनः प्रसेनजित् ॥ १५ ॥
आरोपितत्रिवर्गार्थोपक्रमैः संक्रमैरिव ।
कच्चिदश्चति लोकेषु लीला लीलावतीपतेः ॥ १६ ॥

---

7d,N कुमारा for कुमार
8b,N गलद्...पावकैः for ज्वलद्...पादपैः
c,M द्विषद् for द्युषद्
9,M omits
10c,M दीपैः for यूपैः, d,M बभौ निशि निशि द्विषः for ददौ दिशि दिशि व्यथाम्
11a,N भेजे for रेजे
c,M चैत्यमायायां for चैत्यया मूर्त्या
d,M आदृता for आश्रिता
12c,N विरजा for अविरलां
13a,N अभिविश्य for अन्तर्विश्य
b,N पत्युः for पत्ये
cd,N सभां संभावनालभ्यं सभ्यः सोभ्यासमानशे
14a,M सज्जन for सज्जे
15a,M ततः स and अन्ततः for तन्ततः
cd,N अञ्चितं सितच्छाया for अञ्चितस्मितो दीप्त०

## षोडशः सर्गः

अथोत्साहवतेव श्रीः प्रतीतिः कविनेव च ।
दर्शकेन पुरी प्रापि प्रसेनजिदधिष्ठिता ॥ १ ॥
दानदादीनदानाम्बुविमर्दोद्दामकर्दमे ।
नैकपादपि चस्खाल चित्रं धर्मो यदन्तरे ॥ २ ॥
समस्तम्भा वयन्त्यः खं सद्वाराः सालकाननाः ।
या बभार वलीकान्तकायाः शाला वधूरिव ॥ ३ ॥
इष्टान्मुदा हविर्धारादुर्दिने याति यत्पथे ।
यज्ञधूमासितपटा मोक्षलक्ष्म्यभिसारिका ॥ ४ ॥
विबुधैरप्सरोभिश्च शतक्रतुपरीतया ।
भूदर्पणेऽमरावत्याः प्रतिबिम्बायितं यया ॥ ५ ॥
सन्ध्याख्यमधुनामीन्दुर्यत्र कुट्टिमसंक्रमात् ।
लग्नं धत्ते चलच्चारुस्त्रीपादालक्तकद्रवम् ॥ ६ ॥

---

2c,M3 पप्फाल for चस्खाल; d,N चरन् for चित्रं
3a,M वयन्त्यश्च for वयन्त्यः खं; b,M सद्वारा श्यामलाननाः for सद्वाराः सालकाननाः; d,N ०च्छायाः for कायाः
4a,M इष्टाम्मुदा for इष्टान्मुदा
6a,M ०कामीन्दु for नापीन्दु
c,N लग्नां for लग्नं; d,N ०च्छविम् for द्रवम ; M3 च्छलम्

न विनायकविक्रान्ता न दुर्गाननरोचिता ।
ईश्वरायतनत्वेऽपि न कुमारवृता च या ॥ ७ ॥
या चक्रेऽर्कांशुसंपर्कज्वलद्रत्नार्कपादपैः ।
रत्नसालैर्द्युषद्दोषजुषां नीराजनं दिशाम् ॥ ८ ॥
आर्यलोकोऽर्कभासश्च यत्र तुल्यं महातपाः ।
भूमिभागोऽथ कवयः समया सन्धिमत्सराः ॥ ९ ॥
कलेः पलायमानस्य तापितस्य मखाग्निभिः ।
तोदनैरिव या यूपैर्ददौ दिशि दिशि व्यथाम् ॥ १० ॥
रेजे विहारविच्छित्तिः सुगतानुग्रहासिता ।
सर्वतश्चैत्यया मूर्त्या मोक्षवल्लभमाश्रिता ॥ ११ ॥
स तां सतां संमतात्मा परीत्य पुरुधीः पुरीम् ।
जगाहेऽविरलां राजद्वारं दूतो जितद्विषः ॥ १२ ॥
अन्तर्विश्य विशां पत्ये विदितो वदतां वरः ।
सभासंभावनां सत्यां सत्यः सत्यं समाददे ॥ १३ ॥
स रेजे राजके सज्जे नृपस्येन्दोरिवान्तिके ।
तेजसा तारतारेण ताराराशाविवोशनाः ॥ १४ ॥
तं ततः सन्ततस्यन्दिसान्द्रचन्द्रकचन्द्ररुक् ।
ऊचेऽञ्चितस्मितो दीप्तदीप्रसेनः प्रसेनजित् ॥ १५ ॥
आरोपितत्रिवर्गार्थोपक्रमैः संक्रमैरिव ।
कच्चिदश्चति लोकेषु लीला लीलावतीपतेः ॥ १६ ॥

---

7d,N कुमारा for कुमार
8b,N गलद्...पावकैः for ज्वलद्...पादपैः
c,M द्विषद् for द्युषद्
9,M omits
10c,M दीपैः for यूपैः, d,M बभौ निशि निशि द्विषः for ददौ दिशि दिशि व्यथाम्
11a,N भेजे for रेजे
c,M चैत्यमायायां for चैत्यया मूर्त्या
d,M भाद्दता for आश्रिता
12c,N विरजा for अविरलां
13a,N अभिविश्य for अन्तर्विश्य
b,N पत्युः for पत्ये
cd,N सभां संभावनालभ्यं सभ्यः सोभ्यासमानशे
14a,M सज्जन for सज्जे
15a,M ततः स and अन्ततः for तन्ततः
cd,N अञ्चितं सितच्छाया for अञ्चितस्मितो दीप्त०

# षोडशः सर्गः

अथोत्साहवतेव श्रीः प्रतीतिः कविनेव च ।
दर्शकेन पुरी प्रापि प्रसेनजिदधिष्ठिता ॥ १ ॥
दानदादीनदानाम्बुविमर्दोद्दामकर्दमे ।
नैकपादपि चस्खाल चित्रं धर्मो यदन्तरे ॥ २ ॥
समस्तम्भा वयन्त्यः खं सद्वाराः सालकाननाः ।
या बभार वलीकान्तकायाः शाला वधूरिव ॥ ३ ॥
इष्टान्मुदा हविर्धारादुर्दिने याति यत्पथे ।
यज्ञधूमासितपटा मोक्षलक्ष्म्यभिसारिका ॥ ४ ॥
विबुधैरप्सरोभिश्च शतक्रतुपरीतया ।
भूदर्पणेऽमरावत्याः प्रतिबिम्बायितं यया ॥ ५ ॥
सन्ध्याख्यमधुनामीन्दुर्यत्र कुट्टिमसंक्रमात् ।
लग्नं धत्ते चलच्चारुस्त्रीपादालक्तकद्रवम् ॥ ६ ॥

---

2c,M3 पप्फाल for चस्खाल; d,N चरन् for चित्रं
3a,M वयन्त्यश्च for वयन्त्यः खं; b,M सद्वारा श्यामलाननाः for सद्वाराः सालकाननाः; d,N ०च्छायाः for कायाः
4a,M इष्टाम्मुदा for इष्टान्मुदा
6a,M ०कामीन्दु for नापीन्दु
c,N लग्नां for लग्नं; d,N ०च्छविम् for द्रवम ; M3 ०च्छलम्

न विनायकविक्रान्ता न दुर्गाननरोचिता ।
ईश्वरायतनत्वेऽपि न कुमारवृता च या ॥ ७ ॥
या चक्रेऽर्कांशुसंपर्कज्वलद्वल्वर्कपादपैः ।
रत्नसालैर्द्युषद्वोषजुषां नीराजनं दिशाम् ॥ ८ ॥
आर्यलोकोऽर्कभासश्च यत्र तुल्यं महातपाः ।
भूमिभागोऽथ कवयः समया सन्धिमत्सराः* ॥ ९ ॥
कलेः पलायमानस्य तापितस्य मखाग्निभिः ।
तोदनैरिव या यूपैर्ददौ दिशि दिशि व्यथाम् ॥ १० ॥
रेजे विहारविच्छित्तिः सुगतानुग्रहासिता ।
सर्वतश्चैत्यया मूर्त्या मोक्षवल्लभमाश्रिता ॥ ११ ॥
स तां सतां संमतात्मा परीत्य पुरुधीः पुरीम् ।
जगाहेऽविरलां राजद्वारं दूतो जितद्विषः ॥ १२ ॥
अन्तर्विश्य विशां पत्ये विदितो वदतां वरः ।
सभासंभावनां सत्यां सत्यः सत्यं समाददे ॥ १३ ॥
स रेजे राजके सज्जे नृपस्येन्दोरिवान्तिके ।
तेजसा तारतारेण ताराराशाविवोशनाः ॥ १४ ॥
तं ततः सन्ततस्यन्दिसान्द्रचन्द्रकचन्द्ररुक् ।
ऊचेऽञ्चितस्मितो दीप्तदीप्रसेनः प्रसेनजित् ॥ १५ ॥
आरोपितत्रिवर्गार्थोपक्रमैः संक्रमैरिव ।
कच्चिदश्चति लोकेषु लीला लीलावतीपतेः ॥ १६ ॥

---

7d,N कुमारा for कुमार
8b,N गल्द्...पावकैः for ज्वल्द्...पादपैः
c,M द्विषद् for द्युषद्
9,M omits
10c,M दीपैः for यूपैः, d,M बभौ निशि निशि द्विषः for ददौ दिशि दिशि व्यथाम्
11a,N भेजे for रेजे
c,M चैत्यमायायां for चैत्यया मूर्त्या
d,M आदृता for आश्रिता
12c,N विरजा for अविरलां
13a,N अभिविश्य for अन्तर्विश्य
b,N पत्युः for पत्ये
cd,N सभां संभावनालभ्यं सभ्यः सोभ्यासमानशे
14a,M सज्जन् for सज्जे
15a,M ततः स and अन्ततः for तन्ततः
cd,N अञ्चितं सितच्छाया for अञ्चितस्मितो दीप्त०

## षोडशः सर्गः

अथोत्साहवतेव श्रीः प्रतीतिः कविनेव च ।
दर्शकेन पुरी प्रापि प्रसेनजिदधिष्ठिता ॥ १ ॥
दानदादीनदानाम्बुविमर्दोद्दामकर्दमे ।
नैकपादपि चस्खाल चित्रं धर्मो यदन्तरे ॥ २ ॥
समस्तम्भा वयन्त्यः खं सद्वाराः सालकाननाः ।
या बभार वलीकान्तकायाः शाला वधूरिव ॥ ३ ॥
इष्टान्मुदा हविर्धारादुर्दिने याति यत्पथे ।
यज्ञधूमासितपटा मोक्षलक्ष्म्यभिसारिका ॥ ४ ॥
विबुधैरप्सरोभिश्च शतक्रतुपरीतया ।
भूदर्पणेऽमरावत्याः प्रतिबिम्बायितं यया ॥ ५ ॥
सन्ध्याख्यमधुनामीन्दुर्यत्र कुट्टिमसंक्रमात् ।
लग्नं धत्ते चलच्चारुस्त्रीपादालक्तकद्रवम् ॥ ६ ॥

---

2c,M3 पप्फाल for चस्खाल; d,N चरन् for चित्रं
3a,M वयन्त्यश्च for वयन्त्यः खं; b,M सद्वारा श्यामलाननाः for सद्वाराः सालकाननाः; d,N ॰च्छायाः for कायाः
4a,M इष्टाम्मुदा for इष्टान्मुदा
6a,M ॰कामीन्दु for नापीन्दु
c,N लग्नां for लग्नं; d,N ॰च्छविम् for द्रवम ; M3 ॰च्छलम्

न विनायकविक्रान्ता न दुर्गाननरोचिता ।
ईश्वरायतनत्वेऽपि न कुमारवृता च या ॥ ७ ॥
या चक्रेऽर्कांशुसंपर्कज्वलद्वल्वर्कपादपैः ।
रत्नसालैर्द्युषद्द्वोपजुषां नीराजनं दिशाम् ॥ ८ ॥
आर्यलोकोऽर्कभासश्च यत्र तुल्यं महातपाः ।
भूमिभागोऽथ कवयः समया सन्धिमत्सराः* ॥ ९ ॥
कलेः पलायमानस्य तापितस्य मखाग्निभिः ।
तोदनैरिव या यूपैर्ददौ दिशि दिशि व्यथाम् ॥ १० ॥
रेजे विहारविच्छित्तिः सुगतानुग्रहासिता ।
सर्वतश्चैत्यया मूर्त्या मोहवल्लभमाश्रिता ॥ ११ ॥
स तां सतां संमतात्मा परीत्य पुरुधीः पुरीम् ।
जगाहेऽविरलां राजद्वारं दूतो जितद्विषः ॥ १२ ॥
अन्तर्विश्य विशां पत्ये विदितो वदतां वरः ।
सभासंभावनां सत्यां सत्यः सत्यं समाददे ॥ १३ ॥
स रेजे राजके सज्जे नृपस्येन्दोरिवान्तिके ।
तेजसा तारतारेण ताराराशाविवोशनाः ॥ १४ ॥
तं ततः सन्ततस्यन्दिसान्द्रचन्द्रकचन्द्ररुक् ।
ऊचेऽञ्चितस्मितो दीप्तदीप्रसेनः प्रसेनजित् ॥ १५ ॥
आरोपितात्रिवर्गार्थोपक्रमैः संक्रमैरिव ।
कच्चिदश्चति लोकेषु लीला लीलावतीपतेः ॥ १६ ॥

---

7d,N कुमारा for कुमार
8b,N गल्द्...पावकैः for ज्वलद्...पादपैः
c,M द्विषद् for द्युषद्
9,M omits
10c,M दीपैः for यूपैः, d,M वभौ निशि निशि द्विषः for ददौ दिशि दिशि व्यथाम्
11a,N भेजे for रेजे
c,M चैत्यमायायां for चैत्यया मूर्त्या
d,M आदृता for आश्रिता
12c,N विरजा for अविरलां
13a,N अभिविश्य for अन्तर्विश्य
b,N पत्युः for पत्ये
cd,N सभां संभावनालभ्यं सभ्यः सोभ्यासमानशे
14a,M सज्जन् for सज्जे
15a,M ततः स and अन्ततः for तन्ततः
cd,N अञ्चितं सितच्छाया for अञ्चितस्मितो दीप्त०

तुष्टिः प्रकृष्टा दृष्टा नस्त्वां तेनेह प्रहिण्वता ।
वासरं प्रस्तुवानो हि व्यनक्त्याशा रविर्नृणाम् ॥ १७ ॥
तेजस्व्यपि श्रितः प्रैष्यं प्रभोर्वक्ष्यत्त्वयाः श्रियः ।
शाखी शंसति शंसार्हान् नम्रैः स्कन्धैरधो निधीन् ॥ १८ ॥
राज्ञः स्वभ्यस्तमाकूतं स्वाशयादपि दीप्यते ।
स्यादसह्यतरं भानोस्तेजोऽम्बुप्रतिबिम्बितम् ॥ १९ ॥
त्वादृशैर्गोप्तृभिर्गुप्ता न शीर्यन्ते नृपश्रियः ।
मृदो मृद्भ्योऽप्यलं वोढुमयःपक्वाः कृशानुना ॥ २० ॥
नीतं तेजस्त्वयि न्यासं स्याद् भूयः सुलभं प्रभोः ।
आदत्ते प्रातरेत्यार्कः सुखमग्न्यर्पितं महः ॥ २१ ॥
दूरस्थोऽपि दिशः शास्ति सहायैस्त्वादृशैरसौ ।
व्योमस्थं प्रापयन्त्यर्कं किरणाः पार्थिवान् रसान् ॥ २२ ॥
अर्थोऽनणीयानाख्यातस्त्वां तेनेह प्रहिण्वता ।
दारिताद्रिं तृणस्तम्बे दन्तं न्यस्यति न द्विपः ॥ २३ ॥
तदुद्गिर गिरं कर्णौ वितीर्णोदीर्णनिर्वृतिम् ।
त्वद्दृष्टिहृष्टया दृष्ट्या माऽतिशायि श्रुतिर्मम ॥ २४ ॥
दूताकूतसुधासूतिं श्रीव्यक्तिं शारदामिव ।
विरचय्योचितां वाचं विरराम महीपतिः ॥ २५ ॥
स्वार्थेच्छायमुनाकृष्टिबललाङ्गललेखिकाम् ।
दूतोऽथ प्रतिभोत्कर्षाद् गुर्वीमुदगिरद्गिरम् ॥ २६ ॥

17d,M क्रामत्याशा रविर्मृशम्
18,M omits
19b,M द्यु for अम्बु
20d,M अयःपिण्डः for अयःपक्वाः
22c,N पाययन्ति for प्रापयन्ति
24a,M कान्ते for कर्णौ; b,M उत्कीर्ण for उदीर्ण
25c,M मूर्तिः for सूतिम्
c,N औचितीं for उचितां; N वाचां for वाचं
26a,M वलिना for यमुना; b,M हल for बल
c,N उद्गार for उत्कर्षात्

तद्बुद्धिसहवृद्धाय प्रश्नो लीलां च नायकः ।
ननूदयादभिन्नास्थं व्योम्न्यभूल्लसनं रवेः* ॥ २७ ॥
त्वत्स्वार्थसिद्ध्युपघ्नोऽयं मद्विसर्गः प्रभोरिह ।
वक्ष्यन् पुरोऽर्थं प्रस्तौति रूपकेष्वामुखं कविः ॥ २८ ॥
त्वत्सम्बन्धे गते प्रौढिं भर्तुर्भास्यन्त्यलं श्रियः ।
भासन्ते सौधसंक्रान्ताश्चिरं चन्द्रस्य चन्द्रिकाः ॥ २९ ॥
भर्तुरेवानुभावोऽयं यदित्थं प्रातिभं मम ।
द्युमणिद्युतिभिर्दब्धं दर्पणं* दृष्टिजैह्ययदम् ॥ ३० ॥
तत्प्रेषणप्रभावोऽयं त्वत्प्रियं यन्मयाप्यते ।
अम्भसोऽभ्रेण वृष्टस्य शुक्तौ मुक्तात्मता भवेत् ॥ ३१ ॥
वैभवेऽप्यनहङ्काराः शक्तावपि मृदुक्रियाः ।
सौम्यास्तेजस्यपि स्युः के द्वित्रा अपि भवादृशाः ॥ ३२ ॥
शक्तिर्नीत्या नयो लक्ष्म्या लक्ष्मीर्मैत्र्या गुणैरसौ ।
ते चात्मनात्मा बुद्ध्यासौ ते धीर्वाचानुगम्यते ॥ ३३ ॥
एवं गुणित्वेऽप्यर्हाद्य स्वार्थे ते जागरूकता ।
आत्मप्रयोजनत्वे हि वियुङ्क्ते श्रीः शरीरिणम्* ॥ ३४ ॥
श्रीरनाराधिते ते स्याद् वन्ध्या विन्ध्यपुरीपतौ ।
तनोः सर्वाङ्गवत्त्वेऽपि सेव्यो मूर्ध्नैव साध्यते ॥ ३५ ॥
त्वय्येवमस्वपक्षेऽपि प्रेम प्रस्तौति नः प्रभुः ।
लक्ष्येण लक्ष्मणा लक्ष्म्या लिप्यते मलददाय्यपि* ॥ ३६ ॥

---

27a,M ग्रह for सह
b,M लीना for लीलां
cd,M is very corrupt
28,29 Not found in M
30b,M यदीत्थं for यदित्थं
c,M वृद्धं for दृब्धं
d,M दृष्टिजैक्षणम् for ०जैह्ययदम्
31b,M मयोच्यते for मयाप्यते
33,34 omitted in M
35a,M वश्या for ते स्यात्
c,N स्पन्दो for सेव्यो
36d,N लिप्यते मददाय्यपि for the above

तुष्टिः प्रकृष्टा दृष्टा नस्त्वां तेनेह प्रहिण्वता ।
वासरं प्रस्तुवानो हि व्यनक्त्याशा रविर्नृणाम् ॥ १७ ॥
तेजस्व्यपि श्रितः प्रैष्यं प्रभोर्वक्ष्यत्त्वयाः श्रियः ।
शाखी शंसति शंसार्हान् नम्रैः स्कन्धैरधो निधीन् ॥ १८ ॥
राज्ञः स्वभ्यस्तमाकूतं स्वाशयादपि दीप्यते ।
स्यादसह्यतरं भानोस्तेजोऽम्बुप्रतिबिम्बितम् ॥ १९ ॥
त्वादृशैर्गोप्तृभिर्गुप्ता न शीर्यन्ते नृपश्रियः ।
मृदो मृद्भ्योऽप्यलं वोढुमयःपक्वाः कृशानुना ॥ २० ॥
नीतं तेजस्त्वयि न्यासं स्याद् भूयः सुलभं प्रभोः ।
आदत्ते प्रातरेत्यार्कः सुखमग्न्यर्पितं महः ॥ २१ ॥
दूरस्थोऽपि दिशः शास्ति सहायैस्त्वादृशैरसौ ।
व्योमस्थं प्रापयन्त्यर्कं किरणाः पार्थिवान् रसान् ॥ २२ ॥
अर्थोऽनणीयानाख्यातस्त्वां तेनेह प्रहिण्वता ।
दारिताद्रिं तृणस्तम्बे दन्तं न्यस्यति न द्विपः ॥ २३ ॥
तदुद्गिर गिरं कर्णो वितीर्णोदीर्णनिर्वृतिम् ।
त्वद्दृष्टिहृष्टया दृष्ट्या माऽतिशायि श्रुतिर्मम ॥ २४ ॥
दूताकूतसुधासूतिं श्रीव्यक्तिं शारदामिव ।
विरचय्योचितां वाचं विरराम महीपतिः ॥ २५ ॥
स्वार्थेच्छायमुनाकृष्टिबललाङ्गललेखिकाम् ।
दूतोऽथ प्रतिभोत्कर्षाद् गुर्वीमुदगिरद्गिरम् ॥ २६ ॥

---

17d,M क्रामत्याशा रविर्भृशम्
18,M omits
19b,M द्यु for अम्बु
20d,M अयःपिण्डः for अयःपक्वाः
22c,N पाययन्ति for प्रापयन्ति

24a,M कान्ते for कर्णे; b,M उत्कीर्ण for उदीर्ण
25c,M मूर्तिः for सूतिम्
c,N औचितीं for उचितां; N वाचां for वाचं
26a,M वलिना for यमुना; b,M हल for बल
c,N उद्गार for उत्कर्षात्

तद्वृद्धिसहवृद्धाय प्रश्नो लीलां च नायकः ।
ननूदयादभिन्नास्थं व्योम्न्यभूल्लसनं रवेः* ॥ २७ ॥
त्वत्स्वार्थसिद्ध्युपघ्नोऽयं मद्विसर्गः प्रभोरिह ।
वक्ष्यन् पुरोऽर्थं प्रस्तौति रूपकेष्वामुखं कविः ॥ २८ ॥
त्वत्सम्बन्धे गते प्रौढिं भर्तुर्भास्यन्त्यलं श्रियः ।
भासन्ते सौधसंक्रान्ताश्चिरं चन्द्रस्य चन्द्रिकाः ॥ २९ ॥
भर्तुरेवानुभावोऽयं यदित्थं प्रातिभं मम ।
द्युमणिद्युतिभिर्दृब्धं दर्पणं* दृष्टिजैह्मयदम् ॥ ३० ॥
तत्प्रेषणप्रभावोऽयं त्वत्प्रियं यन्मयाप्यते ।
अम्भसोऽभ्रेण वृष्टस्य शुक्तौ मुक्तात्मता भवेत् ॥ ३१ ॥
वैभवेऽप्यनहङ्काराः शक्तावपि मृदुक्रियाः ।
सौम्यास्तेजस्यपि स्युः के द्वित्रा अपि भवादृशाः ॥ ३२ ॥
शक्तिर्नीत्या नयो लक्ष्म्या लक्ष्मीर्मैत्र्या गुणैरसौ ।
ते चात्मनात्मा बुद्ध्यासौ ते धीर्वाचानुगम्यते ॥ ३३ ॥
एवं गुणित्वेऽप्यर्हाद्य स्वार्थे ते जागरूकता ।
आत्मप्रयोजनत्वे हि वियुङ्क्ते श्रीः शरीरिणम्* ॥ ३४ ॥
श्रीरनाराधिते ते स्याद् वन्ध्या विन्ध्यपुरीपतौ ।
तनोः सर्वाङ्गवत्त्वेऽपि सेव्यो मूर्ध्नैव साध्यते ॥ ३५ ॥
त्वय्येवमस्वपक्षेऽपि प्रेम प्रस्तौति नः प्रभुः ।
लक्ष्येण लक्ष्मणा लक्ष्म्या लिप्यते मलददाय्यपि* ॥ ३६ ॥

---

27a,M श्रह for सह
b,M लीना for लीलां
cd,M is very corrupt
28,29 Not found in M
30b,M यदीत्थं for यदित्थं
c,M वृद्धं for दृब्धं
d,M दृष्टिजैक्षणम् for ०जैह्मयदम्
31b,M मयोच्यते for मयाप्यते
33,34 omitted in M
35a,M वश्या for ते स्यात्
c,N स्पन्दो for सेव्यो
36d,N लिप्यते मददाय्यपि for the above

मज्जन्ति नैवोन्मज्जन्ति तत्प्रतापे रिपुश्रियः ।
आह्लादनाय किं ज्योत्स्ना चन्द्रस्य सति भास्वति ॥ ३७ ॥
विपत्तं हन्ति तेजस्वी पात्रसाहाय्यकेऽर्जिते ।
उखानिखाता हि सुखं नयत्यग्निरपः शुषिम् ॥ ३८ ॥
ततः स्वार्थाय तस्याग्रे सर्वस्वस्यार्पणं क्षमम् ।
सूरे प्रकाशयत्याशाः श्रीः श्लिष्यति कुशेशयम् ॥ ३९ ॥
पराक्रान्तौ विषोढायां लघोरभ्युदयो ध्रुवम् ।
पांशोः पद्भ्यां हतस्य स्यादन्तरिक्षप्लुतिः परा ॥ ४० ॥
अनर्थो नायमल्पस्ते यत्तुभ्यं स प्ररुष्यति ।
सर्वंकषा हि तत्क्रोधाः कल्लोला जलधेरिव ॥ ४१ ॥
प्रजाप्रेयांसमेनं त्वं प्रियाकुरु विराध्य मा ।
धीमतां निधनातीतमाराध्याराधनं धनम् ॥ ४२ ॥
न बलीयोऽभिभूतस्य त्राणायात्मभुवोऽप्यलम् ।
सहैवांशुसहस्रेण प्रदोषो ग्रसते रविम् ॥ ४३ ॥
ज्ञातास्वादाः श्रियो राज्यं भृत्या मित्राणि बान्धवाः ।
एकस्य मानस्यार्थे कः कृती धनमियत् त्यजेत् ॥ ४४ ॥
न मानमलमत्यक्त्वा भूतिं प्राज्ञोऽधिगच्छति ।
प्राग्वान्तधूमजालोऽग्निर्ज्वालाभिर्लभतेऽन्वयम् ॥ ४५ ॥
तेजस्विमण्डले मित्रे त्वां तत्रानुप्रवेशकम् ।
प्रवर्धमानं पश्यन्तु क्रमेणेन्दुमिव प्रजाः ॥ ४६ ॥

---

37b,M त्वत् for तत्
38b,M जिते for अर्जिते
c,M उखां निखाद्य for उखानिखाता
d,M शुषिः for शुषिम्
39c,M काश N कोशं, for which आशाः is suggested
40a,N विषण्णायां for विषोढायां
d,M3 द्युतिः for प्लुतिः
41a,M न्यायमन्दस्तु for नायमल्पस्ते
b,N प्रकुप्यति for प्ररुष्यति
42 Not found in M
44c,M प्रकम्पमानः स्वार्थे for एकस्य मानस्यार्थे
d,M3 इति, M इह for इयत्
44 Not found in M

स्वयंवरस्रजेव त्वां श्लिष्टमौलिं तदाज्ञया ।
यावदायुर्वृणोतु श्रीरनुरक्ता वधूरिव ॥ ४७ ॥
स्पष्टसामसगर्वार्थमित्थमूचिषि दर्शके ।
क्रूरामर्षार्जितव्याजं व्याजहार प्रसेनजित् ॥ ४८ ॥
क्वायमार्य इवाकारः क्व चेदं पटु दुर्वचः ।
अहो विवृतसाङ्कर्या दुर्मेयाश्चित्तवृत्तयः ॥ ४९ ॥
अपि यत्नप्रमृष्टस्य मलमन्तरनुज्झतः ।
ताम्रस्येव खलोक्तस्य श्यामिका लक्ष्यते पुरः ॥ ५० ॥
अमङ्गलानां माङ्गल्या कौशिकानामिवासताम् ।
तेजो दधाना सूरश्रीर्दृष्टिरोगाय जायते ॥ ५१ ॥
हिंसारतिषु रौद्रेषु मलिनेष्वन्यबाधनम् ।
ईर्ष्यामलं खलेष्वास्ते विषमाशीविषेष्विव ॥ ५२ ॥
ह्लादिन्यपि प्रसन्नापि तत्राहंकारतेजनात् ।
मूर्तिर्जाता जलस्येव वह्नितप्तस्य दाहिका ॥ ५३ ॥
के यूयं येषु चायान्ति प्रह्वभावमिमं जनाः ।
कूपमण्डूककल्पो वा वित्ते नान्यप्रभां खलः ॥ ५४ ॥
जिनोक्तियुक्त्या कुणपः* परस्वस्वीकृतौ वयम् ।
युष्माभिरविवेकात्तच्छक्तितौच्छयं समर्थितम् ॥ ५५ ॥
अमुष्याकाण्डभूपीठग्रासगर्धादुदञ्चितः ।
वेलावलयसैन्याब्धिर्बुद्धोक्तिस्तम्भितोद्यमः ॥ ५६ ॥

---

47c,M वृणोति for वृणोतु
49d,N दुर्ज्ञेयाः for दुर्मेयाः
51c,M शूर for सूर
d,M रोषाय for रोगाय
M कल्पते for जायते
52b,M अल्पबान्धवम् for अन्यबाधनम्
53 Not found in M
54a,M इयान्यातु for चायान्ति
d,N अन्य for अपि
55 Not found in M
56ab,M अमुष्याकष्टभूयिष्ठप्रासमर्दादुदञ्चितः

मज्जन्ति नैवोन्मज्जन्ति तत्प्रतापे रिपुश्रियः ।
आह्लादनाय किं ज्योत्स्ना चन्द्रस्य सति भास्वति ॥ ३७ ॥
विपक्षं हन्ति तेजस्वी पात्रसाहाय्यकेऽर्जिते ।
उखानिखाता हि सुखं नयत्यग्निरपः शुषिम् ॥ ३८ ॥
ततः स्वार्थाय तस्याग्रे सर्वस्वस्यार्पणं क्षमम् ।
सूरे प्रकाशयत्याशाः श्रीः श्लिष्यति कुशेशयम् ॥ ३९ ॥
पराक्रान्तौ विषोढायां लघोरभ्युदयो ध्रुवम् ।
पांशोः पद्भ्यां हतस्य स्यादन्तरिक्षप्लुतिः परा ॥ ४० ॥
अनर्थो नायमल्पस्ते यत्तुभ्यं स प्ररुष्यति ।
सर्वंकषा हि तत्क्रोधाः कल्लोला जलधेरिव ॥ ४१ ॥
प्रजाप्रेयांसमेनं त्वं प्रियाकुरु विराध्य मा ।
धीमतां निधनातीतमाराध्याराधनं धनम् ॥ ४२ ॥
न बलीयोऽभिभूतस्य त्राणायात्मभुवोऽप्यलम् ।
सहैवांशुसहस्रेण प्रदोषो ग्रसते रविम् ॥ ४३ ॥
ज्ञातास्वादाः श्रियो राज्यं भृत्या मित्राणि बान्धवाः ।
एकस्य मानस्यार्थे कः कृती धनमियत् त्यजेत् ॥ ४४ ॥
न मानमलमत्यक्त्वा भूतिं प्राज्ञोऽधिगच्छति ।
प्राग्वान्तधूमजालोऽग्निर्ज्वालाभिर्लभतेऽन्वयम् ॥ ४५ ॥
तेजस्विमण्डले मित्रे त्वां तत्रानुप्रवेशकम् ।
प्रवर्धमानं पश्यन्तु क्रमेणेन्दुमिव प्रजाः ॥ ४६ ॥

---

37b,M त्वत् for तत्
38b,M जिते for अर्जिते
c,M उखां निखाद्य for उखानिखाता
d,M शुषिः for शुषिम्
39c,M काश N कोशं, for which आशाः is suggested
40a,N विषण्णायां for विषोढायां
d,M3 द्युतिः for प्लुतिः
41a,M न्यायमन्दस्तु for नायमल्पस्ते
b,N प्रकुप्यति for प्ररुष्यति
42 Not found in M
44c,M प्रकम्पमानः स्वार्थे for एकस्य मानस्यार्थे
d,M3 इति, M इह for इयत्
44 Not found in M

स्वयंवरस्रजेव त्वां श्लिष्टमौलिं तदाज्ञया ।
यावदायुर्वृणोतु श्रीरनुरक्ता वधूरिव ॥ ४७ ॥
स्पष्टसामसगर्वार्थमित्थमूचिषि दर्शके ।
क्रूरामर्षार्जितव्याजं व्याजहार प्रसेनजित् ॥ ४८ ॥
क्वायमार्य इवाकारः क्व चेदं पटु दुर्वचः ।
अहो विवृतसाङ्कर्या दुर्मेयाश्चित्तवृत्तयः ॥ ४९ ॥
अपि यत्नप्रमृष्टस्य मलमन्तरनुज्झतः ।
ताम्रस्येव खलोक्तस्य श्यामिका लक्ष्यते पुरः ॥ ५० ॥
अमङ्गलानां माङ्गल्या कौशिकानामिवासताम् ।
तेजो दधाना सूरश्रीर्दृष्टिरोगाय जायते ॥ ५१ ॥
हिंसारतिषु रौद्रेषु मलिनेष्वन्यबाधनम् ।
ईर्ष्यामलं खलेष्वास्ते विषमाशीविषेष्विव ॥ ५२ ॥
ह्लादिन्यपि प्रसन्नापि तवाहंकारतेजनात् ।
मूर्तिर्जाता जलस्येव वह्नितप्तस्य दाहिका ॥ ५३ ॥
के यूयं येषु चायान्ति प्रह्वभावमिमं जनाः ।
कूपमण्डूककल्पो वा विन्ते नान्यप्रभां खलः ॥ ५४ ॥
जिनोक्तियुक्त्या कुणपः* परस्वस्वीकृतौ वयम् ।
युष्माभिरविवेकात्तच्छक्तितौच्छचं समर्थितम् ॥ ५५ ॥
अमुष्याकाण्डभूपीठग्रासगर्धादुदञ्चितः ।
वेलावलयसैन्याब्धिर्बुद्धोक्तिस्तम्भितोद्यमः ॥ ५६ ॥

---

47c,M वृणोति for वृणोतु
49d,N दुर्ज्ञेयाः for दुर्मेयाः
51c,M शूर for सूर
d,M रोषाय for रोगाय
M कल्पते for जायते
52b,M अल्पबान्धवम् for अन्यबाधनम्
53 Not found in M
54a,M इयान्यातु for चायान्ति
d,N अन्य for अपि
55 Not found in M
56ab,M अमुष्याकष्टभूयिष्ठप्रासमर्दादुदञ्चितः

अन्यथोद्यानयात्रेव स्वर्गक्रान्त्युद्यमोऽपि नः ।
कैवास्था शबरे विन्ध्यभाजि भूभुजि तावके ॥ ५७ ॥
किमेतत्क्रोधकृद्वाक्यं दूते भ्रातर्यपि क्षमम् ।
प्राश्नाति प्राणहृद्भोज्यं भिषङ्मैत्र्येऽपि नातुरः ॥ ५८ ॥
पराज्ञाभारनमितं शिरः साधोर्निरूष्मकम् ।
नोत्तम्भयितुमाकृष्य शक्यं गुणशतैरपि ॥ ५९ ॥
विडम्बनैव पुंसि श्रीः परप्रणतिपांसुले ।
कान्तिं कामिव कुर्वीत कूर्णौ कटककल्पना ॥ ६० ॥
किमोजः सत्यभाषित्वं कः स्वर्थो धर्मसंग्रहः ।
का धीरात्मप्रभाज्ञत्वं का श्रीर्मानोन्नतिर्नृणाम् ॥ ६१ ॥
मूर्तिरर्कोपलस्येव ममेयं दाह्यदग्धये ।
भूरितेजःकृतामर्षाज्ज्वलीति पताकिनी ॥ ६२ ॥
अयं समासः कर्तासि यादृशं तस्य शासनम् ।
तद्वो वक्ष्यति दूतीव मत्सेनाधूलिधोरणी ॥ ६३ ॥
इत्योजस्विसभानन्दसिन्धुसन्दीपनेन्दुना ।
विवृत्य वचसा वाञ्छां व्यरमद्वसुधाधिपः ॥ ६४ ॥
स्वपक्षरूक्षाधिक्षेपमारुतक्षुभितौजसा ।
इत्युद्यत्कोपवाग्ज्वालं जज्वले दर्शकाग्निना ॥ ६५ ॥

---

57a,M उद्यानपात्रे for उद्यानयात्रे;
b,M उपयोगिनः for उद्यमोऽपि नः
58ab,M किं ते मत्क्रोधतद्वाक्यं दूत भ्रातर्यपि क्षमं
c,M प्रीतिभू for प्राणहृत्
d,M भिषगिन्द्रो for भिषङ्मैत्र्ये
59a,M पारावतार for पराज्ञाभार
b,M निरूपकं for निरूष्मकं
c,M येस्तम्भयितुं for नोत्तम्भयितुम्
d,M सज्यं for शक्यं
60c,M कुर्वन्ति for कुर्वीत
61b,M धन for धर्म
d,M दीन for मान
62 Not found in M
63b,M यादृशः for यादृशं
64b,M सभासन्धुक्षणेन्दुना for the above.
65a,M विक्षेप for अधिक्षेप
c,N क्रोध for कोप
N जालं for ज्वालं

अभ्याशाभ्यागतभ्रंशैरभव्यैर्भूयसा जडैः ।
कालेऽप्युक्तं हितं पथ्यमपथ्यार्थं समर्थ्यते ॥ ६६ ॥
साम्यमेति गुरुः साम्ना क्षुभ्यते चामुना लघुः ।
शाम्यत्ययोऽम्भसा तप्तं सर्पिः सर्पति तूच्चकैः ॥ ६७ ॥
लघुरर्थलवस्वाम्यमदद्दुर्ललितक्रियः ।
अनुस्वं मन्यते शोच्यान् शक्रयुक्तार्थवानपि* ॥ ६८ ॥
स्थाप्यमानोपि पथ्यार्थे नार्यः कालुष्यमश्नुते ।
परिवारे चिरन्यस्तः स्पृशति श्यामिकामसिः ॥ ६९ ॥
शक्तो बलीयानीशः सन् पिप्रीषुरतथात्मना ।
अतीयते यत्तत्रास्य किं भाव्यन्यद्भावतः ॥ ७० ॥
विसृष्टस्त्वयि तेनाहमनुकम्प्येऽनुकम्पया ।
तत्तु त्वयान्यथाऽग्राहि यमाय स्पृहयालुना ॥ ७१ ॥
स्वभाग्यपरमाणूनां शेषोंऽशस्ते कियानपि ।
यदुग्रमपि* तां श्लाघां त्वदर्थे साम्न्यचीकरत् ॥ ७२ ॥
अन्यथा क्व लघुश्लाघ्यं साम क्व च स कम्पिणः ।
याञ्चोपक्रमपूर्वं हि हरिर्नेष्टे मृगव्रजे ॥ ७३ ॥
क्रोधान्धकारितमुखं कुटिलो मलवान् जडः ।
लब्ध्वा बहुलपक्षं तं त्वं कृशो भव चन्द्रवत् ॥ ७४ ॥
अभिषेणयतीशे नः क्षुब्धे वाब्धौ युगक्षये ।
जल्प यद्यल्पकोऽप्यंशः क्षितेः स्वस्थोऽवशिष्यते ॥ ७५ ॥
कोऽलं व्योमाङ्गुलैर्मातुं मल्लः को मितयेऽम्बुधेः ।
अतिप्रमाश्चमूस्तस्य कोऽवधारयितुं क्षमः ॥ ७६ ॥

66b,M अभयैः...जनैः for अभव्यैः...जडैः
d,N अपथ्यार्थे for अपथ्यार्थं
67 Not found in M
68a,M बलस्वामि for लवस्वाम्य
d,M शुक्रशुक्रार्थं for शक्रयुक्ता
69,70, Not found in M
71c,M अति for अन्यथा
d,M मया यस्य दयालुना
72d,M धाम्न्यचीकरम् for सौम्न्यचीकरत्
73,75,76 Not found in M

अन्यथोद्यानयात्रेव स्वर्गक्रान्त्युद्यमोऽपि नः ।
कैवास्था शबरे विन्ध्यभाजि भूभुजि तावके ॥ ५७ ॥
किमेतत्क्रोधकृद्वाक्यं दूते भ्रातर्यपि क्षमम् ।
प्राश्नाति प्राणहृद्धोज्यं भिषङ्मैत्र्येऽपि नातुरः ॥ ५८ ॥
पराज्ञाभारनमितं शिरः साधोर्निरूष्मकम् ।
नोत्तम्भयितुमाकृष्य शक्यं गुणशतैरपि ॥ ५९ ॥
विडम्बनैव पुंसि श्रीः परप्रणतिपांसुले ।
कान्तिं कामिव कुर्वीत कूणौ कटककल्पना ॥ ६० ॥
किमोजः सत्यभाषित्वं कः स्वर्थो धर्मसंग्रहः ।
का धीरात्मप्रभाज्ञत्वं का श्रीर्मानोन्नतिर्नृणाम् ॥ ६१ ॥
मूर्तिरर्कोपलस्येव ममेयं दाह्यदग्धये ।
भूरितेजःकृतामर्षाज्ज्वलीति पताकिनी ॥ ६२ ॥
अयं समासः कर्तासि यादृशं तस्य शासनम् ।
तद्वो वक्ष्यति दूतीव मत्सेनाधूलिधोरणी ॥ ६३ ॥
इत्योजस्विसभानन्दसिन्धुसन्दीपनेन्दुना ।
विवृत्य वचसा वाञ्छां व्यरमद्वसुधाधिपः ॥ ६४ ॥
स्वपक्षरूक्षाधिक्षेपमारुतक्षुभितौजसा ।
इत्युद्यत्कोपवाग्ज्वालं जज्वले दर्शकाग्निना ॥ ६५ ॥

---

57a,M उद्दानपात्रे for उद्यानयात्रे;
b,M उपयोगिनः for उद्यमोऽपि नः
58ab,M किं ते मत्क्रोधतद्वाक्यं दूत भ्रातर्यपि क्षमं
c,M प्रीतिभू for प्राणहृत्
d,M भिषगिन्द्रो for भिषङ्मैत्र्ये
59a,M पारावतार for पराज्ञाभार
b,M निरूपकं for निरूष्मकं
c,M येस्तम्भयितुं for नोत्तम्भयितुम्
d,M सज्यं for शक्यं
60c,M कुर्वन्ति for कुर्वीत
61b,M धन for धर्म
d,M दीन for मान
62 Not found in M
63b,M यादृशः for यादृशं
64b,M सभासन्धुक्षणेन्दुना for the above.
65a,M विक्षेप for अधिक्षेप
c,N क्रोध for कोप
N जालं for ज्वालं

अभ्याशाभ्यागतभ्रंशैरभव्यैर्भूयसा जडैः ।
कालेऽप्युक्तं हितं पथ्यमपथ्यार्थं समर्थ्यते ॥ ६६ ॥
साम्यमेति गुरुः साम्ना क्षुभ्यते चामुना लघुः ।
शाम्यत्ययोऽम्भसा तप्तं सर्पिः सर्पति तूच्चकैः ॥ ६७ ॥
लघुरर्थलवस्वाम्यमदद्दुर्ललितक्रियः ।
अनुस्वं मन्यते शोच्यान् शक्रयुक्तार्थवानपि* ॥ ६८ ॥
स्थाप्यमानोपि पथ्यार्थे नार्यः कालुष्यमश्नुते ।
परिवारे चिरन्यस्तः स्पृशति श्यामिकामसिः ॥ ६९ ॥
शक्तो बलीयानीशः सन् पिप्रीषुरतथात्मना ।
अतीयते यत्तत्रास्य किं भाव्यन्यद्भावतः ॥ ७० ॥
विसृष्टस्त्वयि तेनाहमनुकम्प्येऽनुकम्पया ।
तत्तु त्वयान्यथाऽग्राहि यमाय स्पृहयालुना ॥ ७१ ॥
स्वभाग्यपरमाणूनां शेषोंऽशस्ते कियानपि ।
यदुग्रमपि* तां श्लाघां त्वदर्थे साम्न्यचीकरत् ॥ ७२ ॥
अन्यथा क्व लघुश्लाघ्यं साम क्व च स कण्फिणः ।
याञ्चोपक्रमपूर्वं हि हरिर्नेष्टे मृगव्रजे ॥ ७३ ॥
क्रोधान्धकारितमुखं कुटिलो मलवान् जडः ।
लब्ध्वा बहुलपक्षं तं त्वं कृशो भव चन्द्रवत् ॥ ७४ ॥
अभिषेणयतीशे नः क्षुब्धे वाब्धौ युगक्षये ।
जल्प यद्यल्पकोऽप्यंशः क्षितेः स्वस्थोऽवशिष्यते ॥ ७५ ॥
कोऽलं व्योमाङ्गुलैर्मातुं मल्लः को मितयेऽम्बुधेः ।
अतिप्रमाश्वमूस्तस्य कोऽवधारयितुं क्षमः ॥ ७६ ॥

66b,M अभयैः...जनैः for अभव्यैः...जडैः
d,N अपथ्यार्थे for अपथ्यार्थं
67 Not found in M
68a,M बलस्वामि for लवस्वाम्य
d,M शुक्रशुक्रार्थ for शक्रयुक्ता
69,70, Not found in M
71c,M अति for अन्यथा
d,M मया यस्य दयालुना
72d,M धाम्न्यचीकरम् for सीम्न्यचीकरत्
73,75,76 Not found in M

पङ्गोरिवार्णवोल्लङ्घः शिशोरिव शशिग्रहः ।
अवहासफलोऽयं ते दुर्मानः कम्फिणाश्रयः ॥ ७७ ॥
आपृच्छस्व श्रियो भोगान् ज्योक् कुरूर्जेऽञ्जलिं वह ।
स्वागतेनोपतिष्ठस्व चिरादागामुकं यमम् ॥ ७८ ॥
इयतीमपि वेलां ते यत्त्वाम्यामि विराध्यते ।
सैषा कारा क्रुधां भर्तुराज्ञापेक्षा कदर्थना ॥ ७९ ॥
यच्चाथ बुद्धिर्बौद्धी ते (मे) नियन्त्रीति त्रपे ततः ।
क्वोपासकस्त्वं जैनेऽर्थे क्व च राज्यध्वजो धनुः ॥ ८० ॥
मौण्ड्यं विहारः काषायं जिनोपज्ञमिदं व्रतम् ।
न तु मौलिर्न युद्धान्तं नाङ्गलीला दुकूलिनी ॥ ८१ ॥
तदमूमेव वाञ्छन्ति पूरयन्ति पुरश्रियम् ।
त्वयेण मुग्धासत्स्वामिक्षुरप्राः क्षुरवत्खराः ॥ ८२ ॥
सामर्षोत्कर्षमित्युक्त्वा त्यक्त्वा गोष्ठीमगादसौ ।
उदात्तस्तदुदन्तोक्त्या स्वसेनादर्शनोद्यतः ॥ ८३ ॥
सेनान्यं यस्य पस्पर्श सामर्षमिव मारुतम् ।
सदःसरःस्वनास्वाद्य* त्क्षोभमभ्याजगाम सः ॥ ८४ ॥
क्रुधोदगाद्गिरामोघो घोरघोरो रघोर्लघु ।
वक्त्रादब्धेर्महावर्तात्क्षोभारम्भ इव ध्वनिः ॥ ८५ ॥

---

77,cM फलायस्ते for फलोऽयं ते
78b,M ये कुर्युस्तेऽञ्जल्यिग्रहं
d,M स्वयं for यमम
79a,M इयन्ती for इयती
b,M स्वाम्येव for क्षाम्यामि
c,M क्रुधा for क्रुधां
80,81 Not found in M
82a,N वाञ्छन्ते for वाञ्छन्ति
b,N पुरा प्रियां for पुरश्रियम्
d,N प्राज्ञुरखेचराः for क्षुरवत्खराः
84M, Readings are very corrupt
85a,M क्रुद्धोवेगाभिगमो for the above
c,M वक्त्रंदधे for वक्त्रादब्धेः

प्रलयार्कप्रभेवाभूदारोहन्ती भयप्रदा ।
किञ्चित्प्रकीर्णा कोपश्रीरश्मकेशाश्मवेश्मनि ॥ ८६ ॥
संक्रान्तिकृत्कराग्रेण मलिताङ्गे मुहुर्मुहुः ।
रूपमैच्छिष्ट रोषश्रीः कुकुरे मुकुरे यथा ॥ ८७ ॥
दीर्घं वाग्जालमाक्षिप्य क्रुधं नावमिवैरयन् ।
द्विषो मीनानिवोद्धर्तुं निषादोऽभूत्समाकुलः ॥ ८८ ॥
मुमुचे मुचुकुन्देन कुन्दाच्छच्छविरिन्दुना ।
केतुभारूषितेनेव रोषेणास्तमितत्विषा ॥ ८९ ॥
दुःसहं सहदेवेन देवेनेव प्रगर्जता ।
घनोदये क्रुधा भूमौ ववृषे पौलकं पयः ॥ ९० ॥
मन्युयक्ष्मातुरस्तूर्णं प्रसादेनावसीदता ।
प्रत्याचचक्षे सत्त्वोभो भिषजेव महामिषः ॥ ९१ ॥
लब्धरन्ध्रा सुरन्ध्रस्य कोपश्रीर्नीचवागिव ।
परप्राणापहारार्थे प्रवृत्ता नान्वतप्यत ॥ ९२ ॥
कन्दोरमन्दं सस्यन्दे कार्यकालक्रुधा भुजः ।
कलयन् कालियस्याभां कालिन्दीह्रदसादिनः ॥ ९३ ॥
युयुजे वीर्यशौर्यश्रीर्निर्भयोऽन्यैरलुण्ठितः ।
सिन्दूराभं मुखं भर्त्र्या मद्रकः क्रोधमुद्रया ॥ ९४ ॥
त्रसद्दस्योः सदस्युद्यंस्त्रसदस्योः सदस्यदुत् ।
आसाद्य सद्यो नैःसाद्यं क्रुधादित्योऽतमद्युतत्* ॥ ९५ ॥

---

86b,N प्रभा for प्रदा
c,N कांपिल्यकीर्णा for किञ्चित प्रकीर्णा
89d,N मुषित for अस्तमित
91d,M महाभयः for महामिषः
92b,M शीर्णा for श्रीर्नीच
d,M वाप्य० for नान्व०
93a,N न मन्दं for अमन्दं
d,M शालिनः for सादिनः
94b,M अक्षै for अन्यै
c,M भर्ता for भर्त्र्या
95,M omits

पङ्गोरिवार्णवोल्लङ्घः शिशोरिव शशिग्रहः ।
अवहासफलोऽयं ते दुर्मानः कण्फिणाश्रयः ॥ ७७ ॥
आपृच्छस्व श्रियो भोगान् ज्योक् कुरूर्जेऽञ्जलिं वह ।
स्वागतेनोपतिष्ठस्व चिरादागामुकं यमम् ॥ ७८ ॥
इयतीमपि वेलां ते यत्क्षाम्यामि विराध्यते ।
सैषा कारा क्रुधां भर्तुराज्ञापेक्षा कदर्थना ॥ ७९ ॥
यच्चाथ बुद्धिर्बौद्धी ते (मे) नियन्त्रीति त्रपे ततः ।
क्वोपासकस्त्वं जैनेऽर्थे क्व च राज्यध्वजो धनुः ॥ ८० ॥
मौण्ड्यं विहारः काषायं जिनोपज्ञमिदं व्रतम् ।
न तु मौलिर्न युद्धान्तं नाङ्गलीला दुकूलिनी ॥ ८१ ॥
तदमूमेव वाञ्छन्ति पूरयन्ति पुराश्रियम् ।
न्ययेण मुग्धासत्स्वामिक्षुरप्राः क्षुरवत्खराः ॥ ८२ ॥
सामर्षोत्कर्षमित्युक्त्वा त्यक्त्वा गोष्ठीमगादसौ ।
उदात्तस्तदुदन्तोक्त्या स्वसेनादर्शनोद्यतः ॥ ८३ ॥
सेनान्यं यस्य पस्पर्श सामर्षमिव मारुतम् ।
सदःसरःस्वनास्वाद्य* क्षोभमभ्याजगाम सः ॥ ८४ ॥
क्रुधोदगाद्गिरामोघो घोरघोरो रघोर्लघु ।
वक्त्रादब्धेर्महावर्तात्क्षोभारम्भ इव ध्वनिः ॥ ८५ ॥

---

77,cM फलायस्ते for फलोऽयं ते
78b,M ये कुर्युस्तेऽञ्जल्यिग्रहं
d,M स्वयं for यमम्
79a,M इयन्ती for इयती
b,M स्वाम्येव for क्षाम्यामि
c,M क्रुधा for क्रुधां
80,81 Not found in M
82a,N वाञ्छन्ते for वाञ्छन्ति
b,N पुरा प्रियां for पुराश्रियम्
d,N प्राशुरखेचराः for क्षुरवत्खराः
84M, Readings are very corrupt
85a,M क्रुद्धोवेगाभिगमो for the above
c,M वक्त्रंदधे for वक्त्रादब्धेः

प्रलयार्कप्रभेवाभूदारोहन्ती भयप्रदा ।
किञ्चित्प्रकीर्णा कोपश्रीरश्मकेशाश्मवेश्मनि ॥ ८६ ॥
संक्रान्तिकृत्कराग्रेण मलिताङ्गे मुहुर्मुहुः ।
रूपमैक्षिष्ट रोषश्रीः कुकुरे मुकुरे यथा ॥ ८७ ॥
दीर्घं वाग्जालमाक्षिप्य क्रुधं नावमिवैरयन् ।
द्विषो मीनानिवोद्धर्तुं निषादोऽभूत्समाकुलः ॥ ८८ ॥
मुमुचे मुचुकुन्देन कुन्दाच्छच्छविरिन्दुना ।
केतुभारूषितेनेव रोषेणास्तमितत्विषा ॥ ८९ ॥
दुःसहं सहदेवेन देवेनेव प्रगर्जता ।
घनोदये क्रुधा भूमौ ववृधे पौलकं पयः ॥ ९० ॥
मन्युयक्ष्मातुरस्तूर्णं प्रसादेनावसीदता ।
प्रत्याचचक्षे सत्त्वोभो भिषजेव महामिषः ॥ ९१ ॥
लब्धरन्ध्रा सुरन्ध्रस्य कोपश्रीर्नीचवागिव ।
परप्राणापहारार्थे प्रवृत्ता नान्वतप्यत ॥ ९२ ॥
कन्दोरमन्दं सस्यन्दे कार्यकालक्रुधा भुजः ।
कलयन् कालियस्याभां कालिन्दीह्रदसादिनः ॥ ९३ ॥
युयुजे वीर्यशौर्यश्रीर्निर्भयोऽन्यैरलुण्ठितः ।
सिन्दूराभं मुखं भर्त्र्या मद्रकः क्रोधमुद्रया ॥ ९४ ॥
त्रसदस्योः सदस्युर्यस्त्रसदस्योः सदस्यदुत् ।
आसाद्य सद्यो नैःसाद्यं क्रुधादित्योऽतमद्युतत्* ॥ ९५ ॥

---

86b,N प्रभा for प्रदा
c,N कांपिल्यकीर्णा for किञ्चित प्रकीर्णा
89d,N मुषित for अस्तमित
91d,M महाभयः for महामिषः
92b,M शीर्णा for श्रीर्नीच
d,M वाप्य० for नान्व०
93a,N न मन्दं for अमन्दं
d,M शालिनः for सादिनः
94b,M अक्षै for अन्यै
c,M भर्ता for भर्त्र्या
95,M omits

द्रुमस्य क्रोधविटपो यदैव भुवि पप्रथे ।
युद्धाद्भुताध्वनीनानां तदैवोच्छ्वसितं बलम् ॥ ९६ ॥
शंसन्तीं शशिनीवोल्कां सावेशामशिवां शिवौ ।
भृकुटीं वीक्ष्य निश्चिक्युर्लोकाः क्षत्रकुलक्षयम् ॥ ९७ ॥
पुरप्रवेशाभिमुखे द्विट्चमूतापतापसे ।
चक्रे सौवीरवर्णस्य दीपनं क्रोधगाथकः ॥ ९८ ॥
रुक्माङ्गदशिरासारैः श्वासाग्न्यूष्मविलोपितैः ।
भुजयोर्व्यायतं व्यूये वर्मेव शरवर्मणा ॥ ९९ ॥
प्रक्षोभारम्भसंरम्भभग्नाङ्गदकदम्बकः ।
जगाहे रौद्रमाकारं विषसाहं(रं) कदम्बकः ॥ १०० ॥
मुखे तरङ्गिणी क्रोधाङ्गारालिङ्गनपिङ्गला ।
अजस्य जिह्वा गर्जोर्जे मेघे विद्युदिवाद्युतत् ॥ १०१ ॥
मनोर्मुखममर्षोष्णघर्माम्भोविन्दुदन्तुरम् ।
उत्पाताग्निकणाकीर्णमिन्दुविम्बमिवाबभौ ॥ १०२ ॥
दन्ताग्रकोषघोषं यं तर्षोऽकार्षीदमर्षतः ।
प्रतीये स परैः क्रूरः कृतान्तधनुषो ध्वनिः ॥ १०३ ॥
दिदीपे दूतदुर्वाक्यसिन्धुपूरप्रवेशनैः ।
सर्वात्मनैवाखर्वोर्जःश्रुताब्ध्यौर्वहुताशनः ॥ १०४ ॥

---

96,M omits ab
97a,M शंस च for शसन्तीं
b,N omits अशिवां
c,M भ्रुकुटीः for भृकुटीं
98a,M स्थिर for पुर
b,M विद्यासुताय वेधसे
c,M मह्रस्य for वर्णस्य
d,M न ‹क: for गाथकः
99a,M रूक्ष for रुक्म and सारं for सारैः
M omits cd.
100d,N द्विषामातङ्कदम्भकः for विपसाहं कदम्बकः,
101b,M ०द्रि० for ०ङ्गा० and लङ्घन for लिङ्गन
102b,M कर्वुरम् for दन्तुरम्
103,Not found in M
104a,M वाह for वाक्य
b,M पूरं प्रवेचनैः for पूरप्रवेशनैः

ससंसे स्म धराधारो धुन्धोर्मुक्तागुणस्त्रुटन् ।
विषौष्मवेल्लनक्लिष्टः क्रोधाहेरिव कञ्चुकः ॥ १०५ ॥
दृक्ष्यैत्विष्टाष्टको घृष्टस्कन्धजां धूमधारिकाम् ।
भङ्गिनीं भुजशय्यायां शौर्यश्रीकबरीमिव ॥ १०६ ॥
कोपोष्णश्वसितक्लिष्टकण्ठमाल्यं रुरोरुरः ।
अकाण्डामोददारिद्र्यं द्विरेफाणां द्रुतं ददौ ॥ १०७ ॥
रणारण्येऽनरण्याग्नेरमर्षान्निर्ज्वलिष्यतः ।
दिशः प्राक्प्रभवश्चक्रे क्रोधधूमोऽन्धकारिताम् ॥ १०८ ॥
तदित्थं क्रोधसंरम्भसंभारक्षुभितं सदः ।
मेघौघघोरघोषस्य त्रयव्योम्नस्तुलामगात् ॥ १०९ ॥
तैर्व्युदस्य सदस्यास्थां ध्माते प्रधनदुन्दुभौ ।
गृहान् विगाह्याऽसह्योर्जं प्रसह्य समनह्यत ॥ ११० ॥
प्रसेनजिदपि प्राप्य पूजार्थैरिष्टदेवताम् ।
दृष्ट्वा दशबलादेशं दिशमादिशत द्विषः ॥ १११ ॥
रणश्रीसाधनौत्सुक्यात्संवर्मयति राजके ।
संजग्मिरे च सख्येव खिन्ना भूपस्त्रियः शुचा ॥ ११२ ॥
काचित् कण्ठश्रिता पत्युर्युयुत्सोरश्रुवारिभिः
साञ्जनैर्लोहवर्मेव पिननाहाङ्गसेचनैः ॥ ११३ ॥
भर्तुरङ्गप्रभाभ्यङ्गात् सङ्गतस्वर्णवर्मणः ।
पिङ्गा पुराङ्गनाऽन्याभूद् भृष्टेव विरहाग्निना ॥ ११४ ॥
परस्याः प्रयियासन्तं वाष्पधारान्धकारितः ।
प्रियं रुरोध दूरोधो नेत्रदुर्दिननीरदः ॥ ११५ ॥

---

106,Not found in M
107b,M माला for माल्यं
उरुः for उरः
108b,N अमर्षोर्जं for अमर्षात्
ज्वलिष्यतः for निर्ज्वलिष्यतः
c,M द्विषः प्रेक्ष्य ततः for दिशः प्राक्प्रभवः
d,M कारिणः for कारिताम्
109–119,Not found in M

उदस्तया प्रियायान्या पुण्याहोत्पलमालया ।
धूमाल्येव* वियोगाग्नेरभून्य* प्रकृतिर्बभौ ॥ ११६ ॥
अनुव्रज्य सुचिरस्ताका- - - - - - -भ्रुः ।
अन्यस्या न तथाऽरौत्सीद्गतिं तत्प्रेयसो यथा ॥ ११७ ॥
सास्रा दृष्टिर्नवोढायाः पत्युः पादाग्रकीलिता ।
प्रावर्तयत खिन्नायाः पारतन्त्र्यं परिक्रमे ॥ ११८ ॥
आप्रश्नान्* प्रार्थिता पत्या प्रिया दोःकन्दलीद्वयम् ।
यत्कण्ठेऽकृत तत्तस्य रज्वास्त्रकतामगात् ॥ ११९ ॥
मुखामोदभ्रमद्भृङ्गमभिन्नस्वेदबिन्दुकम् ।
कापि शोकाग्निभस्मांशशारश्रीरावहन्मुखम् ॥ १२० ॥
लिप्ते ललाटे भृङ्गालिं भर्तृप्रसदनोचितम् ।
भयादैक्षीदिवैणाक्षी लम्बालकलताश्रितम्* ॥ १२१ ॥
साञ्जनैरश्रुभिः पानं पाणौ* पाययति प्रिये ।
निन्येऽन्या श्वासशोकाग्निधूमौघेनेव नीलताम् ॥ १२२ ॥
लीलाम्भोजं नवोढायाः सवेपथुकरे स्थितम् ।
चाटुनेव चलच्चक्रे प्रेयसो गतिवारणम् ॥ १२३ ॥
कवाटेनार्धरुद्धाङ्गी याता पत्युर्विलोकने ।
विरहक्रकचक्लिष्टा भिदामागादिवाऽपरा ॥ १२४ ॥
शोकश्लथभुजोत्सृष्टैर्वलयैः पदवीं परा ।
व्यधाद् बद्धक्रमैः पत्युः पूर्णां पाशशतैरिव ॥ १२५ ॥

---

120b,N ०भानियत् for ०अभिन्न
121a,N भृङ्गालिः for भृङ्गालिं
प्रसवन for प्रसदन
c,N उपादिक्षदिवैणाक्ष्या for the above
122b,M पाणियाविति for which पाणौ
पाययति is suggested
c,M निश्वास for न्याश्वास
d,M धूमौघनवनीलताम् for the above
123c,M चपलेन for चाटुनेव
d,N प्रेयसा पतिवारणम्
124a,N द्विरूढाङ्गी for अर्धरुद्धाङ्गी
b,M प्रीता, N यातः for याता, suggested
125c,M वाधार्थवक्रगैः for व्यधाद्बद्धक्रमैः

अस्ति तत् प्रसवाम्लानां* रूचां क्लिष्टोष्ठपल्लवाम् ।
प्रियप्रवासग्रीष्मोष्मा कांचित् चक्रे वधूलताम् ॥ १२६ ॥
ते सा -- सरागं च सोष्मसां -- युद्धटाः ।
-- पुरन्ध्रीदृक्पातै - ध्याने स्तुसुराङ्गना ॥ १२७ ॥
ततः श्रोत्रातिथीभूततूर्योद्भटभटारवाः ।
ओकोभ्यो निरगुस्तोषादुपायेभ्य इवोदयाः* ॥ १२८ ॥
शूराग्र्यश्रेणिगर्जद्गजरथतुरगस्यन्दनस्यन्दिदर्प
सर्पत्संपत्तिपत्तिध्वनितधरधनुःसायकासारसारम् ।
दीप्रप्रासप्रहासानलसलसदसिप्रेद्धवृद्धध्वजर्द्धि-
प्रेङ्खन्निस्सङ्ख्यसङ्ख्यस्वनमवनिभुजां सैन्यमाविर्बभूव ॥ १२९ ॥
क्षुन्दन्तः क्ष्मां केतुभिः खं लिखन्तः
क्षिण्वन्तोऽक्षीण्याक्षिपन्तः क्षितीन्द्रान् ।
कल्पभ्रंशाभ्रोद्धटाः सैन्यसार्था-
श्चेलुर्युद्धायाध्वना ते शिवेन ॥ १३० ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये सैन्यप्रस्थानो
नाम चतुर्दशः सर्गः ।

---

128a,M भिधाभूत for अतिथीभूत

# सप्तदशः सर्गः

दर्शकानुशयदर्शनदर्शे पिण्डपातनमथारिपितॄणाम् ।
कर्ष्फिणो घटयितुं रणदीक्षः क्रोधजे पुलकवारिणि सस्नौ ॥ १ ॥
तस्य तत्प्रकृतिचक्रमरातिक्रोधदोषदृढकोपसुदूहे ।
कल्पभङ्गदिनसर्गविहस्तद्वादशार्ककिरणाक्षुभिताभाम् ॥ २ ॥
मन्थभिन्नजलधिध्वनिधीरो दुर्धरः समरदुन्दुभिनादः ।
शूरसङ्गमिव द्युवधूनां वक्तुमम्बरमथोदवरिष्ट ॥ ३ ॥
अद्रिनिर्दलननिर्दयवज्रस्फूर्जथुप्रसरपीवरपूरैः ।
दुन्दुभिध्वनिभरैर्भृतमन्तःस्फोटनिम्नमिव दिक्कुलमासीत् ॥ ४ ॥
स्वामिसत्कृतिलताङ्कुरकृप्तिं कोपकल्पविलयानलवायुम् ।
सत्त्वकाञ्चनकषोपलपट्टं दंशनादरमधत्त नृपौघः ॥ ५ ॥
वर्मभिर्वसितुमूर्ध्वमुदस्तैर्भूभुजः प्रतिभयं वपुरूहुः ।
मेदुरैर्नवबलाहकजालैर्लङ्घ्यमानशिखरा इव शैलाः ॥ ६ ॥

---

1c,M अपि चतुरं for घटयितुं
2b,N क्षोददास्य for क्रोधदोष
d,M ०आमं for आभां
4,Readings in M are very corrupt
c,M हृत for भृत
5d,M दर्शन for दंशन
6,Not found in M

रुक्ममुष्टिरुचिरूषितकोषा व्यद्युतन्नसिलता गललम्बाः ।
लोहकङ्कटवतां सुभटानामुन्नटाभ्रनिभृता इव शम्पाः ॥ ७ ॥
श्यामलाभिरचलत्पुलकाभिः पण्डिताभिरिव मोहनकृत्ये ।
प्रेयसीभिरिव बभ्रुरशून्यं पार्श्वमाहवभटाः छुरिकाभिः ॥ ८ ॥
संवृतानि वदनानि शिरस्त्रैर्भास्वराण्यपि भृशं सुभटानाम् ।
जातजिग्रसिषुराहुमुखाभाभिन्नभानुभयदं वपुरापुः ॥ ९ ॥
सङ्घसङ्घटनया घटिताङ्गा भूभुजो बभुरिभा भृशमग्रे ।
घोरघोषिण इवोग्रघनौघाः कृष्णघोषरुषितस्य मघोनः ॥ १० ॥
तेजनानुभवभिन्नकटाग्रा कालिकेव गजता गुरुगर्जा ।
प्राङ्गणे प्रमथरेतरधारा * सारधारि मदवारि ववर्ष ॥ ११ ॥
सद्गुणैः कृतयुगत्रयरत्नैश्चक्रवत्यविधुराणि वहन्ती ।
विष्णुमूर्तिरिव सादितमोहा शिश्रिये श्रियमथो रथकड्या ॥ १२ ॥
लक्षशो बहुललङ्घितलाचाचालितप्रचुरचामरचक्राः
सप्तयः पथि समं समपप्तन्नूर्मयोऽर्णव इवौर्वशिखाङ्काः ॥ १३ ॥
उत्फलद्भिरविभर्भयदत्वं काञ्चनीयकवचाञ्चितकायैः ।
पत्तिभिः पृथुबलैः स बलौघः सस्फुलिङ्ग इव खाण्डववह्निः ॥ १४ ॥
स्यन्दनं द्रढिमवत्पृथुतुङ्गभूरिसत्त्वभरणादविकम्पा ।
अध्यतिष्ठदथ कप्फिणमूर्तिः केलिकोलहरिपोत्रमिवोर्वीम् ॥ १५ ॥

---

7b,M प्राद्युतन् for व्यद्युतन्
०नद्धाः for ०लम्बाः
8a,M अवलत् for अचलत्
c,M अथ for इव
9a,M संभृतानि for संवृतानि
10c,M घनाभाः for घनौघाः
11a,M धृतार्चा for ववर्ष
12a,M षड्युगैः for सद्गुणैः
d,M कत्या N कुड्याः, may be कड्या
13,Not found in M
14 The order in M is ba
b,M उतत्पतद्भिः for उत्फलद्भिः
15a,N तुङ्गा for तुङ्ग०, suggested
c,M कप्फण for कप्फिण

द्यां नुदन्निव पिबन्निव काष्ठाः क्ष्मां खनन्निव धयन्निव धाम ।
प्रास्थिताथ पिदधान इवाहः सम्प्रताप इव विग्रहवाही ॥ १६ ॥
दीर्घदर्शिनमिवार्यमुपाया वासरा इव सुतेजसमर्कम् ।
तं मनोरथमिवानघमर्थाः साधनैरनुययुः क्षितिपालाः॥ १७ ॥
पीवहृष्टहरिहेषितघोषैः पीलुपीत्करणपल्लवितौघम् ।
चक्रिचक्ररवमेदुररूपं तूर्यजं रसितमारुणदाशाः ॥ १८ ॥
उत्खनद्भिरनुखं निखिलानां खड्गिनां सुखसखैः मुखरागैः ।
प्रेङ्खितैर्मुखरितं शतसङ्ख्यैः सङ्ख्यशङ्खरसितैः खरशब्दैः ॥ १९ ॥
मेघमत्तकरिकर्णकवाटैः केतुभिः समरसिन्धुतरङ्गैः ।
तद्वियद्विटपिपीनपलाशैराजिभूव्यजनकैर्बलमाभात् ॥ २० ॥
संभृताङ्गरभसानुभवाभिर्भूपतेरथ घनप्रचयाभिः ।
अग्रतश्च परपक्षचमूभिः पप्रथे विषमदृष्टिभिरुच्चैः ॥ २१ ॥
कृत्स्नलोकहठसंहृतिहेतोर्व्यापिनी समघटिष्ट रिपूणाम् ।
सेनया धरणिधृद्ध्वजिनी सा द्यौर्द्रुतं प्रलयकालिकयेव ॥ २२ ॥
शङ्खमुख्यमुखदुन्दुभिनादो वर्णवादगुरुरद्भुतशंसी ।
मानमन्युमदनानि* मिथोऽन्तर्भूभुजां सममपप्रथदर्थ्यैः ॥ २३ ॥
तल्पलासितमहाकरवालं कम्पमानकटकाग्रभुजं सा ।
वाहिनी रतमिवाहवमाप्तं प्रत्यनीकमवगृह्य निरूहे ॥ २४ ॥

---

16c,M अह्नः for अहः
17a,N दर्शनं for दर्शिनम्
c,M उन्मनोरथ for तं मनोरथ
18b,M शीत्करण for पीत्करण
d,M भूर्यलं for तूर्यजं
19b,M खण्डिता for खड्गिनां
c,M गत for शत
d,N खमखवैः for खरशब्दैः
20c,M उल्लसत् for तद्वियत्
M साच्छ for पीन
d,M राजिभिर्ध्वजनकैः for the above
21d,N दृष्टि च दृष्टिभिः for विषमदृष्टिभिः
22,23,Not found in M
24b,M कल्पमान for कम्पमान

सज्जवा जयमिता मुखरास्याश्चापलासनपरा गुणघोषाः ।
अन्तरा चिरमुभे अपि सेने पत्तयश्च विशिखाश्च निपेतुः ॥ २५ ॥
प्रस्तुते प्रसृतरौद्ररसार्द्रे क्षत्रसंहरणनाटकनाट्ये ।
पूर्वमन्तकनटो रणरङ्गे बाणकुन्तकुसुमाञ्जलिमास्थत् ॥ २६ ॥
मन्युना खरतरेण चमूनामेवमेत्य समभिद्यत सक्तम् ।
येन नाल्पमपि तत्क्षणमाजिं प्राप कश्चन कचाकचि मुक्ता ॥ २७ ॥
वज्रमुष्टिपरिपिष्टशिरस्त्रस्फोटभिन्नशिरसा सुभटानाम् ।
लोहपावकशिखाशतमिश्रं व्यज्यते स्म न परिस्रवदस्रम् ॥ २८ ॥
केऽपि दीर्घदुरतिक्रमरथ्यामन्थनेन सुचिरं श्रमभाजः ।
संनिपत्य करवाललतायाः छायया विदधुरूष्मविमोक्षम् ॥ २९ ॥
शुद्धदन्तरुचिभिः समदाभिर्द्योतमानकरपुष्करभाभिः ।
केऽपि गाढघटनामभिलेषुः प्रेयसीभिरिव पीलुघटाभिः ॥ ३० ॥
अभ्युपेत्य रभसाद्रणशौण्डाः साङ्गिनीभिरिषुभिर्हृतचित्ताः ।
निर्वृता युधि न केवलमासन्नेवमेव दिवि दिव्यवधूभिः ॥ ३१ ॥
सान्द्रबाणपटसंवृतमूर्तेर्दन्तिदन्तशयनीयशयस्य ।
मानिनः कुलवधूरिव रागादप्सरा व्यधित पार्श्वमशून्यम् ॥ ३२ ॥
योधमाहवविधावनुभूतं हस्तिहस्तपरिवेष्टनमिष्टम् ।
न व्यसस्मरदथेभकरोरूपगूहनसुखेन सुरस्त्री ॥ ३३ ॥
क्षोभिताहवभुवस्तरुणाङ्गास्तिल्लितेन तरन ˘ तुरङ्गाः* ।
आयतैर्जगृहिरे प्रविकीर्णैः कुञ्जराग्रकरवञ्चकबन्धैः ॥ ३४ ॥

---

25b,N योगात् for घोषात्, घोषाः is suggested
26c,N शृङ्गे for रङ्गे
28,29,Not found in M
30a,M प्रमदाभिः for समदाभिः
c,M शान्ति for गाढ
31b,M भृत for हृत
32a,N पद, M घट for पट, suggested
c,M कामिनः for मानिनः
d,M अधित for व्यधित
33d,M सतृष्णा for सुरस्त्री
34,Not found in M
There is lacuna in C

वाजिनां शफशिलाशतकम्पैराश्रितः शिथिलभावमथाङ्गात् ।
तत्यजे समरभूमिभुजङ्ग्या स्त्यानधूलिकुलकञ्चुककोषः ॥ ३५ ॥
उद्यमस्य दधतो विफलत्वं श्यामलीकृतदृशो लघुरूपाः ।
प्राप्य संहतिमनार्यविलासाः पांसवोऽधिमृधमाविरभूवन् ॥ ३६ ॥
पीडयाथ रथहास्तिकपत्तिप्राज्यवाजिखुरजर्जरिताङ्ग्या ।
शिश्रिये पृतनया रजसार्द्रा द्यौः पलायनपरायणयेव ॥ ३७ ॥
संवरं विदधिवांसममन्दस्पन्दका अपि रजःपटमाप्य ।
जालमध्यविधुरा इव मत्स्याः पारतन्त्र्यमगमन् रणशौण्डाः ॥ ३८ ॥
अस्तमाप दिवि दीनकरोऽर्कः प्रोषितेव निमिमील दिनश्रीः ।
अस्फुटाः समकुचन्निव काष्ठा निष्ठितेषु रणरेणुतमःसु ॥ ३९ ॥
निर्वहन् रणवतां रुधिरौघः प्रेरयन् प्रधनपांसुतमांसि ।
व्यञ्जयन् जनदृशामवतारं दारुणास्तरणितापं इवोदैत् ॥ ४० ॥
द्विड्द्विपोत्थमदगन्धगुणाम्भःस्वादनार्जितसुदुर्जयगर्जैः ।
दुर्दिनीकृतदिगर्दितपांसुः प्रासि दानजलवृष्टिरिभाभ्रैः ॥ ४१ ॥
अभ्युपेयुषि विजर्जरभावं भूरजोजठरजालजरायौ ।
सस्फुरैरथ बलैर्विवृताङ्गं गर्भवासत इवाविरभावि ॥ ४२ ॥
विस्फुरद्रुधिरसिक्तरणोर्वीमन्तरा बलरजश्च नभःस्थम् ।
रूप्यहाटककवाटसमुद्गस्थायिवन्नृपतिरत्नगणोऽभूत् ॥ ४३ ॥
भूभुजो निजनिजोर्जितनामश्रावणादिगुणदीपितमानाः ।
ते पुनर्यममनोरथरच्चोरौद्ररात्रिमुखमाहवमूहुः ॥ ४४ ॥

---

35d,N व्योम, M ध्वान for स्त्यान, suggested
36d,N अधिविधम् for अधिमृधम्
37c,N सान्द्रा for सार्द्रा
38d,N नर for रण
40a,M निर्वृतः for निर्वहन्
41a,M अव for मद
b,M मृदुर्जयशब्दः for सुदुर्जयगर्जैः
c,M दुर्वलीकृतजगद्दिततांशु
d,M प्रापि for प्रासि
42c,M अप for अथ
43a,N विस्फुरन् for विस्फुरत
b,N नभःस्थः for नभःस्थं
d,N ०स्था इव for स्थायिवत्

चक्रचापपरिघद्रुघनौघप्रासपट्टिशपरश्वधशूलैः ।
ते गदासिशरशक्तिशतघ्नीवज्रमुष्टिभिरथो मिथ आघ्नन् ॥ ४५ ॥
आततः समरभूशयनीये शीर्णशूरशतशोणितराशिः ।
आससाद नवसान्द्रकुसुम्भप्रच्छदांशुकतुलां पितृभर्तुः ॥ ४६ ॥
मूर्धभिः क्षितिभृतां भ्रुकुटीभिर्भावितैर्भयपदैर्विकटास्यैः ।
तस्तरे रणधरा शतसङ्ख्यैर्द्यौरिव प्रलयकेतुकलापैः ॥ ४७ ॥
तत्क्षणं गलविलोल्लसितासृग्यष्टिकोटिघटितांसशिरोऽभूत् ।
वीरचिह्नमिषुणा जवलूनं केशचामरचितं ललितास्यम् ॥ ४८ ॥
न्यङ्निविष्टशरदारिततुन्दभ्रश्यदान्त्रनिगडाञ्चितपादः ।
स्वान्तनूमपरतन्त्र इवेभः प्रेर्य पर्यणमदन्यकरीन्द्रः ॥ ४९ ॥
घोरघातघटमानविमूर्छानुद्यतोऽधिवसुधं सुधयौक्षत् ।
कुञ्जरेन्द्रकरकोटरकीर्णा स्यन्दमानघनशीकरवृष्टिः ॥ ५० ॥
दन्तिदीर्णतनुमूर्ध्वमुदस्य प्रांशुना युधि करेण करीन्द्रः ।
संगमोत्सुकधियै सुरनार्यै सादरं सुभटमर्पयतीव ॥ ५१ ॥
मण्डितः परिणतो गुरुवर्ष्मा प्रौढमूर्तिर्हरियुग्ममकृच्छ्रात् ।
दन्तयोरुदवहद् गजराजः शृङ्गयोरिव वृषस्तटपङ्कम् ॥ ५२ ॥
प्राणितप्रवमनावधियुद्धाः संश्रिताः स्वसुकृतेन विमानान् ।
स्वप्रभोर्बलपरिक्षयदृष्टौ संक्रुधो वतरितुं पुनरीषुः ॥ ५३ ॥

---

45,Not found in M
47a,N भ्रुकुटीभृत् for भ्रुकुटीभिः
b,N भ्रूविभङ्गभयदैः for भावितैर्भयपदैः
48b,M दृष्टि for यष्टि
d,M दामरचितं for चामरचितं
49,Not found in M
50a,N शौर for घोर
विमर्षान् for विमूर्छान्
b,N युधि योधान् for सुधयौक्षत्
51d,N अर्पयतेव for अर्पयतीव
52a,M वर्मा for वर्ष्मा
N पुरु for गुरु
d,M मृग for वृष
53,M omits

कष्टकाङ्कटिककुट्टितकोटेष्टङ्कृतं कटुकरोटककूटात् ।
उन्मिमेष मुखमग्रमहीभृत्तर्पितान्तकगुरूद्धरणाभम् ॥ ५४ ॥
भ्राम्यतां प्रधनकालनिशायां नीलचर्मतिमिरव्रजभेदि ।
फेरवस्फुटमुखस्फुरितोल्कादीपिकाकुलमकल्पितमासीत् ॥ ५५ ॥
द्यौर्विमानविलसन्मृतशूरा येन येन च यमो निरतृप्यत् ।
येन भूरजनि चोच्चकबन्धा कर्म तन्नतु परं निधनेऽभूत् ॥ ५६ ॥
इत्यश्वचक्रिचक्रच्युतिचलितचमूचारिचण्डोच्चचर्यं
जीर्यन्निर्व्याजवाजिव्रजविजयपदं दातपादातमादौ ।
ज्वालाजालैः समिद्धं द्विरदरदघटाघोरसंघट्टजैस्त-
ज्जज्ञे राजन्यसैन्यं त्रिपुरमिव शरोल्लीढमिष्टं शिवस्य ॥ ५७ ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये संकुलयुद्धं
नाम सप्तदशः सर्गः ।

---

54d,M उद्धरणाभम् for उद्धरणाभम्
55b,M वर्त्म for चर्म
c,M उल्कं for उल्का
56,M omits
57a,M इत्थं तच्चक्रि० for इत्यश्वचक्रि०
M चारु चण्डोच्चरूपं for चारिचण्डोच्चचर्यम्
b,N वीर्यं for जीर्यन्
d,M जन्ये for जज्ञे
Colophon in M has सङ्कुले युद्ध omitting नाम; M has कप्फिल for कप्फिण ।

# अष्टादशः सर्गः

अथ म्लानचमूवल्लीसमुदायबलोदयः ।
आसेदे नृपचक्रेण समुदायबलोदयः ॥ १ ॥ ( यमकम् )
विकटायां रणाटव्यां तत्र सा त्रसदस्युना ।
यावनी वित्तशौर्यश्रीर्मुमुषे मिषयोधिना ॥ २ ॥
पपौ पापापपापापा वावेवविववाविव ।
सासासासिः सासुसंसदुदैदाददादिदोः ॥ ३ ॥ ( चतुरक्षरः )
स्वराज्यभग्नं क्रुद्धात्वं कलिनाकपटच्छदम् ।
सुरन्ध्रसेनाऽनुययौ दमयन्ती दृढं नलम् ॥ ४ ॥
तथाश्वीयखुरक्षुण्णा दूरमारेणुराजयः ।
यथोदमज्जन्नभ्राभा दूरमारेणुराजयः ॥ ५ ॥
पूषेवाम्बुमुचा यावदाजघ्ने जिष्णुना रघुः ।
लघु तावत्तमुद्देशं रुरुर्मरुदिवापतत् ॥ ६ ॥
रराघोरं रघोरर्घा घोरघोरैरघैरघुः ।
रुरुरोघैरघोरार्घराघाघर्घरघुर्घुरः ॥ ७ ॥ ( द्व्यक्षरः )

---

1a,M वर्ति for वल्ली
d,N समुदायवनादयः
2b,M तत्र for सा० त्र०
d,M मुमुचे ऽथ for मुमुचे मिष०
4a,M स्वराज्यभग्नो बुध्दा यं
5c,M मत्ताभा for अभ्राभा
6,Not found in M
7,M omits द्व्यक्षरः

कष्टकाङ्कटिककुट्टितकोटेष्टङ्कतं कटुकरोटककूटात् ।
उन्मिमेष मुखमग्रमहीभृत्तर्पितान्तकगुरूद्धरणाभम् ॥ ५४ ॥
भ्राम्यतां प्रधनकालनिशायां नीलचर्मतिमिरव्रजभेदि ।
फेरवस्फुटमुखस्फुरितोल्कादीपिकाकुलमकल्पितमासीत् ॥ ५५ ॥
द्यौर्विमानविलसन्मृतशूरा येन येन च यमो निरतृप्यत् ।
येन भूरजनि चोच्चकबन्धा कर्म तन्नतु परं निधनेऽभूत् ॥ ५६ ॥
इत्यश्वच्चक्रिचक्रच्युतिचलितचमूचारिचण्डोच्चचर्यं
जीर्यन्निर्व्याजवाजिव्रजविजयपदं दातपादातमादौ ।
ज्वालाजालैः समिद्धं द्विरदरदघटाघोरसंघट्टजैस्त-
ज्जज्ञे राजन्यसैन्यं त्रिपुरमिव शरोल्लीढमिष्टं शिवस्य ॥ ५७ ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये संकुलयुद्धं
नाम सप्तदशः सर्गः ।

---

54d,M उद्धरणाभम् for उद्धरणाभम्
55b,M वर्त्म for चर्म
c,M उल्कं for उल्का
56,M omits
57a,M इत्थं तच्चक्रि० for इत्यश्वच्चक्रि०
M चारु चण्डोच्चरूपं for चारिचण्डोच्चचर्यम्
b,N वीर्यं for जीर्यन्
d,M जन्ये for जज्ञे
Colophon in M has सङ्कुले युद्ध omitting नाम; M has कप्फिल for कप्फिण ।

# अष्टादशः सर्गः

अथ म्लानचमूवल्लीसमुदायबलोदयः ।
आसेदे नृपचक्रेण समुदायबलोदयः ॥ १ ॥ ( यमकम् )
विकटायां रणाटव्यां तत्र सा त्रसदस्युना ।
यावनी वित्तशौर्यश्रीर्मुमुचे मिषयोधिना ॥ २ ॥
पपौ पापापपापापा वावेववविववाविव ।
सासासासिः सासुसंसदुदैदाददादिदोः ॥ ३ ॥ ( चतुरक्षरः )
स्वराज्यभग्नं क्रुद्धात्तं कलिनाकपटच्छदम् ।
सुरन्ध्रसेनाऽनुययौ दमयन्ती दृढं नलम् ॥ ४ ॥
तथाश्वीयखुरक्षुण्णा दूरमारेणुराजयः ।
यथोदमज्जन्नभ्राभा दूरमारेणुराजयः ॥ ५ ॥
पूषेवाम्बुमुचा यावदाजघ्ने जिष्णुना रघुः ।
लघु तावत्तमुद्देशं रुरुर्मरुदिवापतत् ॥ ६ ॥
रराघोरं रघोरर्घा घोरघोरैरघैरघुः ।
रुरुरोघैरघोरार्घराघाघर्घरघुर्घुरः ॥ ७ ॥ ( द्व्यक्षरः )

---

1a,M वर्ति for वल्ली
 d,N समुदायवनादयः
2b,M तत्र for सा० त्र०
 d,M मुमुचे ऽथ for मुमुचे मिष०
4a,M स्वराज्यभग्नो बुध्वा यं
5c,M मत्ताभा for अभ्राभा
6,Not found in M
7,M omits द्व्यक्षरः

कष्टकाङ्कटिककुट्टितकोटेष्टङ्कृतं कटुकरोटककूटात् ।
उन्मिमेष मुखमग्रमहीभृत्तर्पितान्तकगुरूद्धरणाभम् ॥ ५४ ॥
भ्राम्यतां प्रधनकालनिशायां नीलचर्मतिमिरव्रजभेदि ।
फेरवस्फुटमुखस्फुरितोल्कादीपिकाकुलमकल्पितमासीत् ॥ ५५ ॥
द्यौर्विमानविलसन्मृतशूरा येन येन च यमो निरतृप्यत् ।
येन भूरजनि चोच्चकबन्धा कर्म तन्नतु परं निधनेऽभूत् ॥ ५६ ॥
इत्यश्वचक्रिचक्रच्युतिचलितचमूचारिचण्डोच्चचर्यं
जीर्यन्निर्व्याजवाजिव्रजविजयपदं दातपादातमादौ ।
ज्वालाजालैः समिद्धं द्विरदरदघटाघोरसंघट्टजैस्त-
ज्जज्ञे राजन्यसैन्यं त्रिपुरमिव शरोल्लीढमिष्टं शिवस्य ॥ ५७ ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये संकुलयुद्धं
नाम सप्तदशः सर्गः ।

---

54d,M उद्धरणाभम् for उद्धरणाभम्
55b,M वर्त्म for चर्म
c,M उल्कं for उल्का
56,M omits
57a,M इत्थं तच्चक्रि० for इत्यश्वचक्रि०
M चारु चण्डोच्चरूपं for चारिच्चण्डोच्चचर्यम्
b,N वीर्यं for जीर्यन्
d,M जन्ये for जज्ञे
Colophon in M has सङ्कुले युद्ध omitting नाम; M has कप्फिल for कप्फिण ।

## अष्टादशः सर्गः

अथ म्लानचमूवल्लीसमुदायबलोदयः ।
आसेदे नृपचक्रेण समुदायबलोदयः ॥ १ ॥ ( यमकम् )
विकटायां रणाटव्यां तत्र सा त्रसदस्युना ।
यावनी वित्तशौर्यश्रीर्मुमुषे मिषयोधिना ॥ २ ॥
पपौ पापापपापापा वावेवविववाविव ।
सासासासिः सासुसंसदुदैदाददादिदोः ॥ ३ ॥ ( चतुरक्षरः )
स्वराज्यभग्नं क्रुद्धात्तं कलिनाकपटच्छदम् ।
सुरन्ध्रसेनाऽनुययौ दमयन्ती दृढं नलम् ॥ ४ ॥
तथाश्वीयखुरक्षुण्णा दूरमारेणुराजयः ।
यथोदमज्जन्नभ्राभा दूरमारेणुराजयः ॥ ५ ॥
पूषेवाम्बुमुचा यावदाजघ्ने जिष्णुना रघुः ।
लघु तावत्तमुद्देशं रुरुर्मरुदिवापतत् ॥ ६ ॥
रराघोरं रघोरर्घा घोरघोरैरघैरघुः ।
रुरुरोघैरघोरार्घराघाघर्घरघुर्घुरः ॥ ७ ॥ ( द्व्यक्षरः )

---

1a,M वर्ति for वल्ली
d,N समुदायवनादयः
2b,M तत्र for सा० त्र०
d,M मुमुचेऽथ for मुमुचे मिष०
4a,M स्वराज्यभग्नो बुध्द्वा यं
5c,M मत्ताभा for अभ्राभा
6,Not found in M
7,M omits द्व्यक्षरः

उद्धरसे वासङ्गमा* आराहित मां अलालसविरामम् ।
सद्धंस-मेघरासं सवसो हर हे सुसंधेसि ॥ २८ ॥
सुरसत्तम सो माला सम्पादामे सुखेव मोरसहा ।
कोशलवित्तप आदेगुणे स्वकरणेहि मतमेहि ॥ २९ ॥
मन्दारुणोऽसमञ्जस-कीलालासारसंसरादासम्* ।
समरे-हत्त-महम्मे परमुत्तम साम पूरेहि ॥ ३० ॥
अवहे सत्तमगाहे भवत्तं* आलम्ब मंच्छरसमिद्धम् ।
दूरा कलङ्कि-वङ्को स-दोष-रज्जं तु पालेसि ॥ ३१ ॥
धीरासर-संखोहे समुच्छलंते सुमत्तपोरङ्गा ।
एता पहाववत्ता समासि वावा-रूचिरमय्या* ॥ ३२ ॥
अवहो वास स आसे करे समन्दो समूढ-सर-करणम् ।
सत्ता विभवा दारा देव महत्ते वसेसु परम् ॥ ३३ ॥
सत्ता रेहन्ती वासारम्भा बन्धुरङ्ग सुद्धी ते ।
अच्छसि तमुग्गमत्तो वहत्त-फलदिद्ध-वुत्तन्तो ॥ ३४ ॥

---

28 उद्धरसे वर्षगमात् आराधित ! माम् अलालसविरामम् ।
सोद्ध्वंसमेघराशिं सर्वशः हर ! हे ! सुसन्धेहि ॥ २८ ॥
29 सुरसत्तम ! असौ माला शम्पादाम सुखेव मयूरसभा ।
कौशलवृत्तप ! आदेयगुणः स्वकरणैः मतमेहि ॥ २९ ॥
30 मन्दारुणः असमञ्जसकीलालसारसंसरात् आसम्* ।
समरे हतमाहात्म्ये परमुत्तम ! साम पूरयस्व ॥ ३० ॥
31 अपथेऽसत्तमग्राहे भवत्वमालम्ब्य मात्सर्यसमृद्धम् ।
दूरात् कलङ्किवक्रः सदोषराज्यं त्वम् अपीपलः ॥ ३१ ॥
32 धैर्यासरसंक्षोभे समुच्छलति सुमन्त्रपौराज्ञात् ।
एतावत्प्रभाववृत्तात् समासीत् पापारुचिः अरम्या ॥ ३२ ॥
M3 रम्या for रमय्या
33 अपथः वासः स आसीत् करोति स मन्दः समूढसरकरणम् ।
सत्त्वानि विभवाः दाराः देव ममान्ते अवशिष्येरन् परम् ॥ ३३ ॥
34 शास्तः ! राजमाना वर्षारम्भात् बन्धुराङ्ग शुद्धिः ते ।
अच्छसि तमउद्गमः अतः प्रभूतफलदृब्धवृत्तान्तः ॥ ३४ ॥

करुणाहि तवपदेसा सुरतेरुच्चा विसम्मदेरक्ता ।
सुह-सत्ता कलगल-सिहि-सारस-मोरा रवारद्धा ॥ ३५ ॥
रामो तत्तपवित्तं सुरथ-वदामोह-ताल-सङ्कत्तो ।
चित्ते लोहे वामो सच्छ-ललामो वि मार-दमम् ॥ ३६ ॥
सहइ तरंगेहि परं गाहइ हासम्वरं कला-जत्ते ।
वसइ दमे वाकरणं भासइ तो साकामं* अत्त-भवम् ॥ ३७ ॥
असिसिरकल्लोले हे सरमण चित्ते मितारणे सूरो ।
सुरवणकलाविरासी देवं(व) मेहन्तरालम्ब ॥ ३८ ॥
असमञ्जसोहिते जोरङ्कत्तो सो समुद्धरेहाव ।
भवसरसि हि तिमिरजरं सिञ्च इदं मोह-धीरङ्कम् ॥ ३९ ॥
जाताखहासमणे समलासिरवेरिवास एताहे ।
देवोहा सङ्ककुभा मायत्ता साम लंबेहि ॥ ४० ॥
असम-स्मर-ज्जवारे सम्मत्ते ता वसेहि तारङ्ग ।
सहसत्तमीसखेमं करणहुता दन्तुरसमेहि* ॥ ४१ ॥

---

35 करुणाभिः तपउपदेशात् सुरते अरुच्याः विसम्मदे अरक्ताः ।
सुखसत्त्वाः कलगलशिखिसारसमयूराः रवाराद्धाः ॥ ३५ ॥

36 रामः तत्त्वप्रवृत्तं सुरथपदामोहतारसङ्क्रान्तः ।
चित्ते लोभे वामो स्वच्छललामः अपि मारदमम् ॥ ३६ ॥

37 सहते तरङ्गैः परं गाहते भासाम्बरं कृतायत्नः ।
वसति दमे व्याकरणं भासते अतः सत्कामम् आत्मभवम् ॥ ३७ ॥

38 अशिशिरकल्लोले हे श्रमण ! चित्तेऽमितारण्ये सूर्यः ।
सुरवनकलाविरासीत् देव मेधान्तरालम्ब ! ॥ ३८ ॥

39 असमञ्जाशोभितः ज्वराङ्कात्मा असौ समुद्ध्रियताम् अव ।
भवसरसि तिमिरज्वरं सिञ्च इमं मोघधैर्याङ्कम् ॥ ३९ ॥

40 जाताक्षभासमणेः शमलासिरवैरिव आस्स्व एतर्हि ।
देवौघाः सङ्ककुभः मायात्मानः साम लम्बयस्व ॥ ४० ॥

41 अशमस्मरज्वरः सम्यक्त्वे तावत् वासय ताराङ्ग !
स हसन् त्वम् ईश क्षेमं करणभृतः दन्तुर* शमैः ॥ ४१ ॥

उद्धरसे वासङ्गमा* आराहित मां अलालसविरामम् ।
सद्धंस-मेघरासं सवसो हर हे सुसंधेसि ॥ २८ ॥
सुरसत्तम सो माला सम्पादामे सुखेव मोरसहा ।
कोशलवित्तप आदेगुणे स्वकरणेहि मतमेहि ॥ २९ ॥
मन्दारुणोऽसमञ्जस-कीलालासारसंसरादासम्* ।
समरे-हत्त-महम्मे परमुत्तम साम पूरेहि ॥ ३० ॥
अवहे सत्तमगाहे भवत्तं* आलम्ब मंच्छरसमिद्धम् ।
दूरा कलङ्कि-वङ्को स-दोष-रज्जं तु पालेसि ॥ ३१ ॥
धीरासर-संखोहे समुच्छलंते सुमत्तपोरङ्गा ।
एता पहावत्ता समासि वावा-रूचिरमय्या* ॥ ३२ ॥
अवहो वास स आसे करे समन्दो समूढ-सर-करणम् ।
सत्ता विभवा दारा देव महत्ते वसेसु परम् ॥ ३३ ॥
सत्ता रेहन्ती वासारम्भा बन्धुरङ्ग सुद्धी ते ।
अच्छसि तमुग्गमत्तो वहत्त-फलदिद्ध-वुत्तन्तो ॥ ३४ ॥

---

28 उद्धरसे वर्षगमात् आराधित ! माम् अलालसविरामम् ।
सोद्ध्वंसमेघराशिं सर्वशः हर ! हे ! सुसन्धेहि ॥ २८ ॥

29 सुरसत्तम ! असौ माला शम्पादाम सुखेव मयूरसभा ।
कौशलवृत्तप ! आदेयगुणः स्वकरणैः मतमेहि ॥ २९ ॥

30 मन्दारुणः असमञ्जसकीलालसारसंसरात् आसम्* ।
समरे हतमाहात्म्ये परमुत्तम ! साम पूरयस्व ॥ ३० ॥

31 अपथेऽसत्तमग्राहे भवत्वमालम्ब्य मात्सर्यसमृद्धम् ।
दूरात् कलङ्किवक्रः सदोषराज्यं त्वम् अपीपलः ॥ ३१ ॥

32 धैर्यासरसंक्षोभे समुच्छलति सुमन्त्रपौराङ्गात् ।
एतावत्प्रभावत्तात् समासीत् पापारुचिः अरम्या ॥ ३२ ॥

M3 रम्या for रमय्या

33 अपथः वासः स आसीत् करोति स मन्दः समूढसरकरणम् ।
सत्त्वानि विभवाः दाराः देव ममान्ते अवशिष्येरन् परम् ॥ ३३ ॥

34 शास्तः ! राजमाना वर्षारम्भात् बन्धुराङ्ग शुद्धिः ते ।
अच्छसि तमउद्गमः अतः प्रभूतफलदब्धवृत्तान्तः ॥ ३४ ॥

करुणाहि तवपदेसा सुरतेरुच्चा विसम्मदेरक्का।
सुह-सत्ता कलगल-सिहि-सारस-मोरा खारद्धा ॥ ३५ ॥
रामो तत्तपवित्तं सुरथ-वदामोह-ताल-सङ्कत्तो।
चित्ते लोहे वामो सच्छ-ललामो वि मार-दमम् ॥ ३६ ॥
सहइ तरंगेहि परं गाहइ हासम्वरं कला-जत्ते।
वसइ दमे वाकरणं भासइ तो साकामं* अत्त-भवम् ॥ ३७ ॥
असिसिरकल्लोले हे सरमण चित्ते मितारणे सूरो।
सुरवणकलाविरासी देवं(व) मेहन्तरालम्ब ॥ ३८ ॥
असमञ्जसोहिते जोरङ्कत्तो सो समुद्धरेहाव।
भवसरसि हि तिमिरजरं सिञ्च इदं मोह-धीरङ्कम् ॥ ३९ ॥
जाताखहासमणे समलासिरवेरिवास एताहे।
देवोहा सङ्कुभा मायत्ता साम लंबेहि ॥ ४० ॥
असम-स्मर-ज्ववारे सम्मत्ते ता वसेहि तारङ्ग।
सहसत्तमीसखेमं करणहुता दन्तुरसमेहि* ॥ ४१ ॥

---

35 करुणाभिः तपउपदेशात् सुरते अरुच्याः विसम्मदे अरक्काः।
सुखसत्त्वाः कलगलशिखिसारसमयूराः खाराद्धाः ॥ ३५ ॥
36 रामः तत्त्वप्रवृत्तं सुरथपदामोहतारसङ्क्रान्तः।
चित्ते लोभे वामो स्वच्छललामः अपि मारदमम् ॥ ३६ ॥
37 सहते तरङ्गैः परं गाहते भासाम्वरं कृतायत्नः।
वसति दमे व्याकरणं भासते अतः सत्कामम् आत्मभवम् ॥ ३७ ॥
38 अशिशिरकल्लोले हे श्रमण ! चित्तेऽमितारण्ये सूर्यः।
सुरवनकलाविरासीत् देव मेधान्तरालम्ब ! ॥ ३८ ॥
39 असमञ्जशोभितः ज्वराङ्कात्मा असौ समुद्ध्रियताम् अव।
भवसरसि तिमिरज्वरं सिञ्च इमं मोघधैर्याङ्कम् ॥ ३९ ॥
40 जाताक्षभासमणेः शमलासिरवैरिव आस्स्व एतर्हि।
देवौघाः सङ्कुभः मायात्मानः साम लम्बयस्व ॥ ४० ॥
41 अशमस्मरज्वरः सम्यक्त्वे तावत् वासय ताराङ्ग !
स हसन् त्वम् ईश क्षेमं करणभृतः दन्तुर* शमैः ॥ ४१ ॥

सत्तरसा कम्पो राअत्ता बुद्धिं तुमे समो रविणा ।
अहरं कालेयमहावसहर वासं बहु लहन्ता ॥ ४२ ॥
अङ्गसिरीमसच्चे देवं सकला-विज्ञा-तमोहरणम् ।
कम्पावरणेहिं सामहि सरणो* वहइ हासगुणम् ॥ ४३ ॥
जूरसि रागो भोगोवरमे चित्ते परस्म(स्स) सम्माहि ।
सन्तोसं गामन्ते मेधामेत्ता विवत्तेहि ॥ ४४ ॥
तरिस-हरिस-वेरा मुञ्चसे तो वियत्ता
ववकिरख-ममत्तो सामिकालेहितावम् ।
सरस-महिम-सद्धा मारिभङ्गात(त्त)वाहं*
फलउ च सविरुद्धा सम्मदेहा सिवं दे ॥ ४५ ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये संस्कृतप्राकृतभाषासमावेशेन सम्बुद्धाभिष्टवो नामैकोनविंशः सर्गः ॥

---

42 सत्त्वरसात् अनुकम्प्रः रागात्मा बुद्धिः त्वं समो रविणा ।
अधरकालेयमहावृषधर सौरभं बहु लभमानः ॥ ४२ ॥
43 अङ्ग ! श्रियां असत्यायां देवं सकलाविद्यातमोहरणम् ।
कम्पावरणैः सामभिः शरणं वहति हासगुणम् ॥ ४३ ॥
44 अजीर्यत रागो भोगोपरमे चित्ते परस्य सम्यक्ताभिः ।
सन्तोषं कामयन्ते मेधामात्राः विवर्तैः ॥ ४४ ॥
45 तर्षहर्षवैरात् मुच्यसे अतः विवर्तात्
व्यपकर्षममत्वः अस्वामिकालःअभितापम् ।
सदृशमहिमश्राद्धः मारभङ्गात्तबाधं
फलतु च स्वविरुद्धात् शर्मदेहात् शिवं ते ॥ ४५ ॥

M has तरसि हरसि for which तरिस हरिस is read by me.
Colophon in M omits सम्बुद्धाभिष्टवो and has समावेशो नाम ।

## विंशः सर्गः

अर्चाचर्चां चाटुचर्याभिरुच्चैः कृत्वेत्याजिज्यानिजन्यां जिनस्य ।
आज्ञादाक्ष्याद् दाक्षिणात्ये क्षितीशे प्रह्वीभूते शाखिनीवानिलेन ॥ १ ॥
तत्सैन्येषु प्रागिव प्राकटेष्वप्योजोरूढैरूढसंपत्सु सत्सु ।
बौद्ध्या गच्छत्स्वग्रमन्तर्द्धिमृद्ध्या व्रध्नज्योतिर्बृंहयेव ग्रहेषु ॥ २ ॥
स्पृष्ट्वा स्पन्दं सौगतैः प्रातिहार्यैः श्रावस्तीयक्ष्मापतेर्वाहिनीषु ।
वर्षावर्षप्राप्तपूरप्लवाभिः सम्यक् साम्यं निम्नगाभिर्गतासु ॥ ३ ॥
मौलिश्लिष्टाक्लिष्टसेवाञ्जलीनामुष्णं पूष्णो मुष्णतां संहतत्वात् ।
सिञ्चत्युच्चैश्चक्रके खेचराणां धर्म्यं धर्मस्वामिनं पुष्पवृष्ट्या ॥ ४ ॥
आर्तत्रासध्वान्तभेदप्रभातं सन्ध्याम्भोदाभ्युज्जिहानेन्दुभङ्ग्या ।
ताम्रस्निग्धं लक्ष्मलक्ष्मीप्रशस्तं हस्तं काषायाम्बराग्रादुदस्य ॥ ५ ॥
अच्छाच्छाभिर्मुक्तमुक्तालताभिर्हासश्रीभिर्वाक्सरित्सारसाभिः ।
वर्षन् विद्यावैजयन्तीभिरोष्ठं मध्ये मेधाकौमुदीचन्द्रिकाभिः ॥ ६ ॥

---

1a,M अद्धा for अर्चा
2b,M ओजो for अप्योजो
c,M तेष्वा० for बौद्ध्या०
M मूर्ध्ना for ०मृद्ध्या
3c,M वर्षापूरस्तप्त for वर्षावर्षप्राप्त
d,M संपत्काम्यं for सम्यक्साम्यं
4a,M आश्लिष्ट for आक्लिष्ट
b,M is very corrupt.
c,M संचित्य for सिञ्चति
5a,M आर्तिश्वास for आर्तत्रास
M भेद्यप्रतापं for भेदप्रभातं
c,M प्रयस्तं for प्रशस्तं
6d,M मन्ये for मध्ये

सत्तरसा कम्पो राअत्ता बुद्धिं तुमे समो रविणा ।
अहरं कालेयमहावसहर वासं बहु लहन्ता ॥ ४२ ॥
अङ्गसिरीमसच्चे देवं सकला-विज्ञा-तमोहरणम् ।
कम्पावरणेहिं सामहि सरणो* वहइ हासगुणम् ॥ ४३ ॥
जूरसि रागो भोगोवरमे चित्ते परस्म(स्स) सम्माहि ।
सन्तोसं गामन्ते मेधामेत्ता विवत्तेहि ॥ ४४ ॥
तरिस-हरिस-वेरा मुच्चसे तो वियत्ता
ववकिरख-ममत्तो सामिकालेहितावम् ।
सरस-महिम-सद्धा मारिभङ्गात(त्त)वाहं*
फलउ च सविरुद्धा सम्मदेहा सिवं दे ॥ ४५ ॥

इति श्रीकप्फिणाभ्युदये महाकाव्ये संस्कृतप्राकृतभाषासमावेशेन
सम्बुद्धाभिष्टवो नामैकोनविंशः सर्गः ॥

---

42 सत्त्वरसात् अनुकम्प्रः रागात्मा बुद्धिः त्वं समो रविणा ।
अधरकालेयमहावृषधर सौरभं बहु लभमानः ॥ ४२ ॥
43 अङ्ग ! श्रियां असत्यायां देवं सकलाविद्यातमोहरणम् ।
कम्पावरणैः सामभिः शरणं वहति हासगुणम् ॥ ४३ ॥
44 अजीर्यत रागो भोगोपरमे चित्ते परस्य सम्यक्कृताभिः ।
सन्तोषं कामयन्ते मेधामात्राः विवर्तैः ॥ ४४ ॥
45 तर्षहर्षवैरात् मुच्यसे अतः विवर्तात्
व्यपकर्षममत्वः अस्वामिकालःअभितापम् ।
सदृशमहिमश्राद्धः मारभङ्गात्तबाधं
फलतु च स्वविरुद्धात् शर्मदेहात् शिवं ते ॥ ४५ ॥

M has तरसि हरसि for which तरिस हरिस is read by me.
Colophon in M omits सम्बुद्धाभिष्टवो and has समावेशो नाम ।

# विंशः सर्गः

अर्चाचर्चां चाटुचर्याभिरुच्चैः कृत्वेत्याजिज्यानिजन्यां जिनस्य ।
आज्ञादाक्ष्याद् दाक्षिणात्ये क्षितीशे प्रह्वीभूते शाखिनीवानिलेन ॥ १ ॥
तत्सैन्येषु प्रागिव प्राकटेष्वप्योजोरूढैरूढसंपत्सु सत्सु ।
बौद्धया गच्छत्सूग्रमन्तर्द्धिमृद्ध्या ब्रध्नज्योतिर्बृंहयेव ग्रहेषु ॥ २ ॥
स्पृष्ट्वा स्पन्दं सौगतैः प्रातिहार्यैः श्रावस्तीयक्ष्मापतेर्वाहिनीषु ।
वर्षावर्षप्राप्तपूरप्लवाभिः सम्यक् साम्यं निम्नगाभिर्गतासु ॥ ३ ॥
मौलिश्लिष्टाक्लिष्टसेवाञ्जलीनामुष्णं पूष्णो मुष्णतां संहतत्वात् ।
सिञ्चत्युच्चैश्चक्रके खेचराणां धर्म्यं धर्मस्वामिनं पुष्पवृष्ट्या ॥ ४ ॥
आर्तत्रासध्वान्तभेदप्रभातं सन्ध्याम्भोदाभ्युज्जिहानेन्दुभङ्ग्या ।
ताम्रस्निग्धं लक्ष्मलक्ष्मीप्रशस्तं हस्तं काषायाम्बराग्रादुदस्य ॥ ५ ॥
अच्छाच्छाभिर्मुक्तमुक्तालताभिर्हासश्रीभिर्वाक्सरित्सारसाभिः ।
वर्षन् विद्यावैजयन्तीभिरोष्ठं मध्ये मेधाकौमुदीचन्द्रिकाभिः ॥ ६ ॥

---

1a,M अद्धा for अर्चा
2b,M ओजो for अप्योजो
c,M तेष्वा० for बौद्धया०
M मूर्ध्ना for ०मृद्ध्या
3c,M वर्षापूरस्तप्त for वर्षावर्षप्राप्त
d,M संपत्काम्यं for सम्यक्साम्यं
4a,M आश्लिष्ट for आक्लिष्ट
b,M is very corrupt.
c,M संचित्य for सिञ्चति
5a,M आर्तिश्वास for आर्तत्रास
M भेद्यप्रतापं for भेदप्रभातं
c,M प्रयस्तं for प्रशस्तं
6d,M मन्ये for मध्ये

काषायांशुश्रीभिरालोहिनीभिस्तत्त्वज्योतिर्भासभासन्निभाभिः ।
वृद्धे वर्गस्योपवर्गस्य सर्गे शान्त्यै कृत्वा वाजिनीराजनेज्याम् ॥ ७ ॥
कालिन्द्यम्भोवेणिकालिङ्गिताङ्गत्वङ्गद्गङ्गाभङ्गभङ्गीसमानाम् ।
बिभ्राणो भ्रूमञ्जरीकान्तिकीर्णामूर्णामन्तःशीकरोद्गारगौरीम् ॥ ८ ॥
शान्तैः कान्तैर्दीप्तिवैदग्ध्यदिग्धैः स्निग्धस्निग्धैर्दुग्धमुग्धैरदुग्धैः ।
दृष्टैरिष्टैर्विग्रहिण्या विमुक्तेरावर्त्येवोदग्रमग्रेऽवतारम् ॥ ९ ॥
प्रेद्धां राद्धां रुन्धतीमन्धकारं शस्तां शास्ताऽऽस्तिक्यवस्त्वेकवास्तुम् ।
भद्रां भास्वान्भामिवाभ्येत्य तुङ्गां गां गाम्भीर्योद्गारिणीमुज्जगार ॥ १० ॥
(इति दशभिः कुलकम्)

साधो साधुत्वं पृथग्ज्ञानदोषादेषोऽस्माभिर्भक्तिसंतुष्टतुष्टेः* ।
भागी भूतेरायतौ त्वं हि यस्याः पश्याम्यस्याः श्यामिकां वृत्तिमेताम् ॥ ११ ॥
अर्हामर्हत्त्वस्य मन्ये तवामूं मूर्तिं मर्त्योऽस्मीति मा मान्य मंस्थाः ।
श्रीमत्तां तां वक्ष्यतो मोक्षगन्त्रीं – – भङ्गं राजता राजते किम् ॥ १२ ॥
भुक्ताप्युच्चैर्यामसंसृप्ततृप्तिर्भ्रश्यत्यन्तेऽत्यन्तसाङ्कर्यकार्यः ।
निर्वाणान्तं स्वादु भुक्त्वा मनस्वी पूर्वोच्छिष्टां कः श्रियं तां प्रतीप्सेत् ॥ १३ ॥
येभ्यो लभ्यं –˘ मर्थं प्रतीयात् तेऽपि स्कन्धाः सन्निरोधानुबन्धाः ।
सापायेनापायि वस्त्वाहरेत् कः कल्याणीभ्यः प्रोज्झ्य लोभं पथिभ्यः ॥ १४ ॥
संस्काराणां स्थाम विद्यादविद्या विच्च्यैते – ना मरूपाय* सालम् ।
रूपं तस्मादेति षाडायतन्यं तन्येतास्य स्पर्शतः स्पर्शसत्ता ॥ १५ ॥

---

7c,M बद्धे for वृद्धे
9a,M श्रान्तैः for शान्तैः
M दीप्त for दीप्ति
d,M विमुक्तैः for विमुक्तेः
10d,M यो बभार for उज्जगार
11d,M स्वामिका for श्यामिकां
12a,M तथासौ for तवामूं
b,M मन्दः for मान्य
d,M अर्क for किम्
13a,M सृष्ट for सृप्त
d,M प्रतीच्छेत् for प्रतीप्सेत्
14,15, M omits; 14 has lacuna in a and 15 is fragmentary in b

स्पर्शावेद्या वेदनाऽतश्च तृष्णा तृष्णा सोपादानसत्तानिदानम् ।
जन्मोपादानाद् भवोऽप्याददानः सूते जातिं सा जराद्यं च दुःखम् ॥ १६ ॥
दुःखस्कन्धे सामुदायं गतेऽर्थे नैरोधी धीरत्र धीरैर्निधेया ।
उन्मूल्येमां हेतुमालां भजेदं धर्मात् सत्त्वं तस्य सत्ता सुसत्ता ॥ १७ ॥
उत्तानोऽयं नच्छिदावान्न चान्यैः छिन्नश्छिन्नप्लोतिको विप्लवारिः ।
वैवृत्येनावृत्तिकृत्सु प्रकाशः स्वाख्यातो मे सांख्यधर्मेण धर्मः ॥ १८ ॥
निष्क्रामासाज्जालकादारभस्व स्कन्धत्यागं धाम्नि युज्यस्व बौद्धे ।
भङ्गं भूभृत्कुञ्जर प्रापयोग्रं मृत्योः सैन्यं त्वं नडागारवृत्त्या ॥ १९ ॥
योगायालं योऽप्रमादाय योऽलं शान्तः शास्तुः शासने धर्ममाप्तुम् ।
सांक्लेशिक्यास्तस्य पौनर्भविष्याभूमेर्भङ्गेऽभ्येति धीः पारिपूरिः ॥ २० ॥
नित्यानित्येऽनित्यनित्याभिमानं भित्त्वाऽन्यात्मन्यात्मनानात्मवत्ताम् ।
यात्यात्मीयास्थामनात्मीयकेऽस्यन्सौख्यं सौख्यख्यातिमानादिसौख्ये ॥२१॥
श्रेयोऽस्य स्यात्सत्यदृष्टेरवश्यं विश्वं विश्वानन्दनन्दीप्रहाणे ।
नन्दीमान्द्यान्नैति रागोऽनुरागं रागत्यागान्मुक्तिरह्नाय कार्या ॥ २२ ॥
इत्यावृत्तिं शास्तरि प्रस्तुवाने वाचामुच्चैरूचिषि च्यावितार्तिम् ।
प्रोचे राजा जातचित्तप्रसादो दीक्षादाक्ष्ये दक्षिणो दाक्षिणात्यः ॥ २३ ॥
अद्योदीर्णं दीर्णमान्ध्यं ममाक्ष्णोरद्याकस्मादस्मि सुप्तप्रबुद्धः ।
आभिर्भर्तुर्भारतीभिस्तवाहं मग्नो मग्नः सम्यगभ्युद्धृतोऽस्मि ॥ २४ ॥

---

16a,M दृष्ट्या for तृष्णा
b,M तृप्त्या for तृष्णा; N shows lacuna for दान in निदानम्
d,M सूत्रे for सूते
17a,M संप्रदायं for सामुदायं
b,N सिद्ध्यै for धीरैः
18,19 M omits
20b,M आप्तं for आप्तुं
c,M शान्तेः शिक्षा for सांक्लेशिक्याः
21a,N ०नेत्य० for अनित्य
c,M असौ for अस्यन्
22d,N अस्तान्य for अह्नाय
23a,N स्रस्तवाच्ये for प्रस्तुवाने
b,M उच्चिचीषामिवार्तिम्
d,M दीक्षादक्षो for दीक्षादाक्ष्ये
24a,M अत्र for अद्य
N मान्द्यं for आन्ध्यं
b,M अपि for अद्य
d,N अद्य for अस्मि

काषायांशुश्रीभिरालोहिनीभिस्तत्त्वज्योतिर्भासभासन्निभाभिः ।
वृद्धे वर्गस्योपवर्गस्य सर्गे शान्त्यै कृत्वा वाजिनीराजनेज्याम् ॥ ७ ॥
कालिन्द्यम्भोवेणिकालिङ्गिताङ्गत्वङ्गद्गङ्गाभङ्गभङ्गीसमानाम् ।
बिभ्राणो भ्रूमञ्जरीकान्तिकीर्णामूर्णामन्तःशीकरोद्गारगौरीम् ॥ ८ ॥
शान्तैः कान्तैर्दीप्तिवैदग्ध्यदिग्धैः स्निग्धस्निग्धैर्दुग्धमुग्धैरदुग्धैः ।
दृष्टैरिष्टैर्विग्रहिण्या विमुक्तेरावर्त्यैवोदग्रमग्रेऽवतारम् ॥ ९ ॥
प्रेद्धां राद्धां रुन्धतीमन्धकारं शस्तां शास्ताऽऽस्तिक्यवस्त्वेकवास्तुम् ।
भद्रां भास्वान्भामिवाभ्येत्य तुङ्गां गां गाम्भीर्योद्गारिणीमुज्जगार ॥ १० ॥

(इति दशभिः कुलकम्)

साधो साधुत्वं पृथग्ज्ञानदोषादेषोऽस्माभिर्भक्तिसंतुष्टतुष्टेः* ।
भागी भूतेरायतौ त्वं हि यस्याः पश्याम्यस्याः श्यामिकां वृत्तिमेताम् ॥ ११ ॥
अर्हामर्हत्त्वस्य मन्ये तवामूं मूर्तिं मर्त्योऽस्मीति मा मान्य मंस्थाः ।
श्रीमत्तां तां वक्ष्यतो मोक्षगन्त्रीं – – भङ्गं राजता राजते किम् ॥ १२ ॥
मुक्ताप्युच्चैर्यामसंसृप्ततृप्तिर्भ्रश्यत्यन्तेऽत्यन्तसाङ्कर्यकार्यः ।
निर्वाणान्तं स्वादु मुक्त्वा मनस्वी पूर्वोच्छिष्टां कः श्रियं तां प्रतीप्सेत् ॥ १३ ॥
येभ्यो लभ्यं –⏑ मर्थं प्रतीयात् तेऽपि स्कन्धाः सन्निरोधानुबन्धाः ।
सापायेनापायि वस्त्वाहरेत् कः कल्याणीभ्यः प्रोज्झ्य लोभं पथिभ्यः ॥ १४ ॥
संस्काराणां स्थाम विद्यादविद्या विच्यैते – ना मरूपाय* सालम् ।
रूपं तस्मादेति षाडायतन्यं तन्येतास्य स्पर्शतः स्पर्शसत्ता ॥ १५ ॥

---

7c,M वद्धे for वृद्धे
9a,M श्रान्तैः for शान्तैः
M दीप्त for दीप्ति
d,M विमुक्तैः for विमुक्तेः
10d,M यो बभार for उज्जगार
11d,M स्वामिका for श्यामिकां
12a,M तथासौ for तवामूं
b,M मन्दः for मान्य
d,M अर्कं for किम्
13a,M सृष्ट for सृप्त
d,M प्रतीच्छेत् for प्रतीप्सेत्
14,15, M omits; 14 has lacuna in a and 15 is fragmentary in b

स्पर्शावेद्या वेदनाऽतश्च तृष्णा तृष्णा सोपादानसत्तानिदानम् ।
जन्मोपादानाद् भवोऽप्याददानः सूते जातिं सा जराद्यं च दुःखम् ॥ १६ ॥
दुःखस्कन्धे सामुदायं गतेऽर्थे नैरोधी धीरत्र धीरैर्निधेया ।
उन्मूल्येमां हेतुमालां भजेदं धर्मात् सत्त्वं तस्य सत्ता सुसत्ता ॥ १७ ॥
उत्तानोऽयं नच्छिदावान्न चान्यैः छिन्नश्छिन्नप्लोतिको विप्लवारिः ।
वैवृत्येनावृत्तिकृत्सु प्रकाशः स्वाख्यातो मे सांख्यधर्मेण धर्मः ॥ १८ ॥
निष्क्रामासाज्जालकादारभस्व स्कन्धत्यागं धाम्नि युज्यस्व बौद्धे ।
भङ्गं भूभृत्कुञ्जर प्रापयोग्रं मृत्योः सैन्यं त्वं नडागारवृत्त्या ॥ १९ ॥
योगायालं योऽप्रमादाय योऽलं शान्तः शास्तुः शासने धर्ममाप्तुम् ।
सांक्लेशिक्यास्तस्य पौनर्भविष्याभूमेर्भङ्गेऽभ्येति धीः पारिपूरिः ॥ २० ॥
नित्यानित्येऽनित्यनित्याभिमानं भित्त्वाऽन्यात्मन्यात्मनानात्मवत्ताम् ।
यात्यात्मीयास्थामनात्मीयकेऽस्यन्सौख्यं सौख्यख्यातिमानादिसौख्ये ॥२१॥
श्रेयोऽस्य स्यात्सत्यदृष्टेरवश्यं विश्वं विश्वानन्दनन्दीप्रहाणे ।
नन्दीमान्द्यान्नैति रागोऽनुरागं रागत्यागान्मुक्तिरह्नाय कार्या ॥ २२ ॥
इत्यावृत्तिं शास्तरि प्रस्तुवाने वाचामुच्चैरूचिषि च्यावितार्तिम् ।
प्रोचे राजा जातचित्तप्रसादो दीक्षादाक्ष्ये दक्षिणो दाक्षिणात्यः ॥ २३ ॥
अद्योदीर्णं दीर्णमान्ध्यं ममाक्ष्णोरद्याकस्मादस्मि सुप्तप्रबुद्धः ।
आभिर्भर्तुर्भारतीभिस्तवाहं मग्नो मग्नः सम्यगभ्युद्धृतोऽस्मि ॥ २४ ॥

---

16a,M दृष्ट्या for तृष्णा
b,M तृप्त्या for तृष्णा; N shows lacuna for दान in निदानम्
d,M सूत्रे for सूते
17a,M संप्रदायं for सामुदायं
b,N सिद्धयै for धीरैः
18,19 M omits
20b,M आप्तं for आप्तुं
c,M शान्तेः शिक्षा for सांक्लेशिक्याः
21a,N ०नेत्य० for अनित्य
c,M असौ for अस्यन्
22d,N अस्तान्य for अह्नाय
23a,N स्रस्तवाच्ये for प्रस्तुवाने
b,M उच्चिचीषामिवार्तिम्
d,M दीक्षादक्षो for दीक्षादाक्ष्ये
24a,M अत्र for अद्य
N मान्द्यं for आन्ध्यं
b,M अपि for अद्य
d,N अद्य for अस्मि

तित्यक्षामि क्षेमरक्षी तितिक्षुर्भोगीवाङ्गात् कञ्चुकं भोगजालम् ।
क्षामक्षामे मेऽत्र गात्रेऽग्र्यगोत्र प्रव्रज्याज्यं प्राज्यमुक्षेर्मुमुक्षोः ॥ २५ ॥
आपृच्छे क्ष्मां रक्षणीया क्षमा मे ज्योक् तेजोभ्यः शान्तिरभ्येतु साध्वी ।
भिक्षैवास्तु स्वस्ति लक्ष्म्यै तदा त्वां सेवेऽरण्यान्यञ्जलिः सद्मनेऽयम् ॥ २६ ॥
लब्ध्वा दृब्धिं त्वत्प्रणामाञ्जलीनां मौलिर्मौलिश्रीस्पृहां मुञ्चतां मे ।
रुन्धां सन्ध्येवोज्ज्वलैषा प्रदोषं काषायश्रीर्द्राग् दुकूलादरं च ॥ २७ ॥
संविद्वर्मा स्मृत्युपस्थानशस्त्रो योग्यं युग्यं प्राप्य संपत्प्रहाणम् ।
आर्याष्टाङ्गोत्तुङ्गमार्गाग्रसैन्यः क्लिश्नन् (मारा)रीन्नवोऽस्म्यद्य राजा ॥ २८ ॥
इत्यभ्यर्थ्य क्ष्मापतौ भिक्षुभावं बुद्धानुज्ञैकप्रतीक्षे स्थितेऽथ ।
कालप्रेक्षी दम्यदीक्षादमस्य स्वामी विश्वव्याजहा व्याजहार ॥ २९ ॥
सत्यं सत्यां सत्यदृष्टौ सुदृष्टे पात्रं पुत्र त्वं भृशं भिक्षुवृत्तेः ।
कालस्त्वस्यास्ते प्रतीक्ष्यः कियानप्यायातीच्छाप्राप्तकाला हि सिद्धिः ॥ ३० ॥
ये संस्काराः प्राक्प्रजाकार्यमार्याः कार्यं स्तास्तेऽत्र राज्यध्वजेन ।
तेषां शेषं भद्र भुक्त्वा फलांशं सर्तव्योऽहं विद्विषां काल काले ॥ ३१ ॥
मा भोगेभ्यो भङ्गुरेभ्यः प्रकृत्या मा प्राणेभ्यो मा श्रिये मा यशोभ्यः ।
श्राद्धः शुद्धः श्रद्धया शाधि साधो पृथ्वीं पृथ्वीरत्न रत्नत्रयार्थे ॥ ३२ ॥
बुद्धे बुद्धिं धत्स्व बोधाय बोधेर्निष्ठामिष्टे भक्तिधर्मेण धर्मे ।
श्रीसंघातं प्रापयस्वार्यसंघं द्राघीयस्याः संपदो ह्येष पन्थाः ॥ ३३ ॥

---

25 M is very corrupt
c,M तस्य for मेऽत्र
26,M omits
27c,M श्री for एषा
28,M omits. N shows lacuna for मारा which is suggested.
29a,M अभ्यर्च्य for अभ्यर्थ्य
30b,M पूत for पुत्र
त्वादृशो for त्वं भृशं
d,M and M3 इष्ट for इच्छा
कालादि for कालाहि
31a,M प्राक्तना for प्राक्प्रजा०
c,M शेषां for शेषं
M मुक्त्वा for भुक्त्वा
M फलाशां for फलांशं
32d,M पृथ्वीरत्न प्राज्यरत्नत्रयार्थे
33a,M बोधेऽप्यखण्डे for बोधाय बोधेः
Numbering in M is wrong

जात्यन्धोऽन्यस्त्रीजनालोकलौल्ये दृश्यं द्रष्टुं देववद् दिव्यदृष्टिः ।
उर्वीमुर्वीमाप्य कीर्तिं प्रशासत् स्वस्तापत्तिर्योऽस्ति सोऽस्त्यस्ति नान्यः ॥ ३४ ॥
रागो मैत्र्यां द्वेषपोषः प्रमत्ते लोभो धर्मे सत्यमानेऽभिमानः ।
येषामेते तेषु भान्त्येव भावाः स्थानावेशेनेह दोषोऽप्यदोषः ॥ ३५ ॥
यस्माद्दत्तादानमाद्यं निदानं प्राणिप्राणप्राणितव्यातिपातः ।
रक्षा कामं काममिथ्याप्रचारस्तस्मात्पापात्ते विरामोऽभिरामः ॥ ३६ ॥
कृत्वा न्यासं स्पर्शमात्रं क्रियाणां यः पुष्णाति प्रेमतः पुण्यपालीम् ।
स श्लाघ्योऽसौ वासरश्रीरिवार्कात् तस्माद् भेदं नैति लोकान्तरेऽपि ॥ ३७ ॥
धर्मे श्रद्धा सम्मतिः सत्यसारे दाने दार्ढ्यं संप्रदायो दयायाम् ।
क्षान्तौ क्षोदः प्रेम पुण्ये दमे दृग् येषां मुक्तास्ते गृहस्थाश्रमेऽपि ॥ ३८ ॥
धन्विन् धिन्वन् पुण्यपण्यं पुषाण द्वेष्यं द्वेषोन्मेषमुष्णं मुषाण ।
धीकालुष्यं क्षान्तिकोषं कुषाण श्रेयो ह्यग्रे धर्मनिघ्नक्रियाणाम् ॥ ३९ ॥
मन्मायातस्ते समुत्तीर्णमाभिः सङ्गच्छस्व स्वाभिरुच्चैश्च भूमिः ।
इत्थं शास्ता तं प्रशास्य प्रशस्यं भूतोत्तारे तारभूतिस्तिरोऽभूत् ॥ ४० ॥
संबुद्धस्यानुग्रहप्रत्यवेक्षापक्षप्राप्ते कोशलेशोऽपि तस्मिन् ।
पोषायेन्दुः पूषणीवोपलिल्ये भर्तुर्भावो यत्र भृत्यस्य सोऽध्वा ॥ ४१ ॥
ऋद्ध्या बौद्ध्या सोऽथ संभूय भूयः स्वैरी स्वीयैः सैन्यशब्दैः शिवोत्थैः ।
लीलावत्यामेत्य लीलाः प्रचक्रे धर्मे सक्तः साधुभिः सानुलापः ॥ ४२ ॥

---

34a,M यः for अन्य
35a,M द्वेषमोक्षप्रमत्तो for द्वेषपोषः प्रमत्ते
प्रमादे for प्रमत्ते seems better.
36b,N व्यानिपातः for व्यातिपातः
37,M omits cd, hence the mistake after 33 b in numbering.
38c,M च येषां for दमे दृग्
d,M नूनं for येषां
39,41,M omits.
40c,M प्रशंस्य for प्रशस्यं
d,M इत्याचक्ष्य for भूतोत्तारे
d,M तस्य दूतःस्थितो for तारभूतिस्तिरो०
42a,M संभाष्यैवं for ऋद्धया बौद्धया
सोऽप्य for सोऽथ
b,M स्वीयैः स्वीयशब्दैः
N स्वैश्चान्यैश्च सैन्यैः
M3,breaks off here. The remark is शेषः खण्डितः
d,N omits सक्तः
N सङ्गलन् मङ्गलाय for साधुभिः सानुलापः

तित्यक्षामि क्षेमरक्षी तितिक्षुर्भोगीवाङ्गात् कञ्चुकं भोगजालम् ।
क्षामक्षामे मेऽत्र गात्रेऽग्र्यगोत्र प्रव्रज्याज्यं प्राज्यमुक्षेर्मुमुक्षोः ॥ २५ ॥
आपृच्छे क्ष्मां रक्षणीया क्षमा मे ज्योक् तेजोभ्यः शान्तिरभ्येतु साध्वी ।
भिक्षैवास्तु स्वस्ति लक्ष्म्यै तदा त्वां सेवेऽरण्यान्यञ्जलिः सद्मनेऽयम् ॥ २६ ॥
लब्ध्वा दृष्टिं त्वत्प्रणामाञ्जलीनां मौलिर्मौलिश्रीस्पृहां मुञ्चतां मे ।
रुन्धां सन्ध्येवोज्ज्वलैषा प्रदोषं काषायश्रीर्द्राग् दुकूलादरं च ॥ २७ ॥
संविद्वर्मा स्मृत्युपस्थानशस्त्रो योग्यं युग्यं प्राप्य संपत्प्रहाणम् ।
आर्याष्टाङ्गोत्तुङ्गमार्गाग्रसैन्यः क्लिश्नन् (मारा)रीन्नवोऽस्म्यद्य राजा ॥ २८ ॥
इत्यभ्यर्थ्य क्ष्मापतौ भिक्षुभावं बुद्धानुज्ञैकप्रतीक्षे स्थितेऽथ ।
कालप्रेक्षी दम्यदीक्षादमस्य स्वामी विश्वव्याजहा व्याजहार ॥ २९ ॥
सत्यं सत्यां सत्यदृष्टौ सुदृष्टे पात्रं पुत्र त्वं भृशं भिक्षुवृत्तेः ।
कालस्त्वस्यास्ते प्रतीक्ष्यः कियानप्यायातीच्छाप्राप्तकाला हि सिद्धिः ॥ ३० ॥
ये संस्काराः प्राक्प्रजाकार्यमार्याः कार्यं सूतास्तेऽत्र राज्यध्वजेन ।
तेषां शेषं भद्र भुक्त्वा फलांशं स्मर्तव्योऽहं विद्विषां काल काले ॥ ३१ ॥
मा भोगेभ्यो भङ्गुरेभ्यः प्रकृत्या मा प्राणेभ्यो मा श्रिये मा यशोभ्यः ।
श्राद्धः शुद्धः श्रद्धया शाधि साधो पृथ्वीं पृथ्वीरत्न रत्नत्रयार्थे ॥ ३२ ॥
बुद्धे बुद्धिं धत्स्व बोधाय बोधेर्निष्ठामिष्टे भक्तिधर्मेण धर्मे ।
श्रीसंघातं प्रापयस्वार्यसंघं द्राघीयस्याः संपदो ह्येष पन्थाः ॥ ३३ ॥

---

25 M is very corrupt
c,M तस्य for मेऽत्र
26,M omits
27c,M श्री for एषा
28,M omits. N shows lacuna for मारा which is suggested.
29a,M अभ्यर्च्य for अभ्यर्थ्य
30b,M पूत for पुत्र
त्वादृशो for त्वं भृशं
d,M and M3 इष्ट for इच्छा
कालादि for कालाहि
31a,M प्राक्तना for प्राक्प्रजा०
c,M शेषां for शेषं
M मुक्त्वा for भुक्त्वा
M फलाशां for फलांशं
32d,M पृथ्वीरत्न प्राज्यरत्नत्रयार्थे
33a,M बोधेऽप्यखण्डे for बोधाय बोधेः
Numbering in M is wrong

जात्यन्धोऽन्यस्त्रीजनालोकलौल्ये दृश्यं द्रष्टुं देववद् दिव्यदृष्टिः ।
उर्वीमुर्वीमाप्य कीर्तिं प्रशासत् स्वस्तापत्तिर्योस्ति सोऽस्त्यस्ति नान्यः ॥ ३४ ॥
रागो मैत्र्यां द्वेषपोषः प्रमत्ते लोभो धर्मे सत्यमानेऽभिमानः ।
येषामेते तेषु भान्त्येव भावाः स्थानावेशेनेह दोषोऽप्यदोषः ॥ ३५ ॥
यस्माद्दत्तादानमाद्यं निदानं प्राणिप्राणप्राणितव्यातिपातः ।
रत्ना कामं काममिथ्याप्रचारस्तस्मात्पापात्ते विरामोऽभिरामः ॥ ३६ ॥
कृत्वा न्यासं स्पर्शमात्रं क्रियाणां यः पुष्णाति प्रेमतः पुण्यपालीम् ।
स श्लाघ्योऽसौ वासरश्रीरिवार्कात् तस्माद् भेदं नैति लोकान्तरेऽपि ॥ ३७ ॥
धर्मे श्रद्धा सम्मतिः सत्यसारे दाने दार्ढ्यं संप्रदायो दयायाम् ।
क्षान्तौ क्षोदः प्रेम पुण्ये दमे दृग् येषां मुक्तास्ते गृहस्थाश्रमेऽपि ॥ ३८ ॥
धन्विन् धिन्वन् पुण्यपण्यं पुषाण द्वेष्यं द्वेषोन्मेषमुष्णं मुषाण ।
धीकालुष्यं क्षान्तिकोषं कुषाण श्रेयो ह्यग्रे धर्मनिघ्नक्रियाणाम् ॥ ३९ ॥
मन्मायातस्ते समुत्तीर्णमाभिः सङ्गच्छस्व स्वाभिरुच्चैश्चभूमिः ।
इत्थं शास्ता तं प्रशास्य प्रशस्यं भूतोत्तारे तारभूतिस्तिरोऽभूत् ॥ ४० ॥
संबुद्धस्यानुग्रहप्रत्यवेक्षापक्षप्राप्ते कोशलेशोऽपि तस्मिन् ।
पोषायेन्दुः पूषणीवोपलिल्ये भर्तुर्भावो यत्र भृत्यस्य सोऽध्वा ॥ ४१ ॥
ऋद्ध्या बौद्ध्या सोऽथ संभूय भूयः स्वैरी स्वीयैः सैन्यशब्दैः शिवोत्थैः ।
लीलावत्यामेत्य लीलाः प्रचक्रे धर्मे सक्तः साधुभिः सानुलापः ॥ ४२ ॥

---

34a,M यः for अन्य
35a,M द्वेषमोक्षप्रमत्तो for द्वेषपोषः प्रमत्ते
प्रमादे for प्रमत्ते seems better.
36b,N व्यानिपातः for व्यातिपातः
37,M omits cd, hence the mistake after 33 b in numbering.
38c,M च येषां for दमे दृग्
d,M नूनं for येषां
39,41,M omits.
40c,M प्रशंस्य for प्रशस्यं
d,M इत्याचक्ष्य for भूतोत्तारे
d,M तस्य दूतःस्थितो for तारभूतिस्तिरो०
42a,M संभाष्यैवं for ऋद्ध्या बौद्ध्या
सोऽप्य for सोऽथ
b,M स्वीयैः स्वीयशब्दैः
N स्वैश्चान्यैश्च सैन्यैः
M3,breaks off here. The remark is शेषः खण्डितः
d,N omits सक्तः
N सङ्गलन् मङ्गलाय for साधुभिः सानुलापः

( ग्रन्थकर्तुः प्रशस्तिः )

विद्याशाली शीलशोभासुभिक्षो भिक्ष्वाचार्यश्चन्द्रमित्राभिधोऽभूत् ।
बौद्धी बुद्धिर्यं श्रिता शुद्धिसौधं सौधं साध्वी चन्द्रिकेवोच्चचार ॥ ४३ ॥
प्रेष्ठाद् गोष्ठीधर्मधर्म्येण धर्म्या धीमन्मध्येऽध्येषणां प्राप्य तस्मात् ।
भट्टार्कस्वाम्यात्मजेन प्रणिन्ये सूक्तिः सक्तश्रीः शिवस्वामिनेयम् ॥ ४४ ॥
मध्येकाश्मीरं शुद्धिमाह्लादकत्वं प्राप्तात्प्रालेयस्पर्धयेवाथ वृद्धिम् ।
काव्यात्कल्पोऽस्मात् कल्पतां पुण्यराशिः प्राणिप्राणानां प्रीणनश्रीः शिवाय ॥४५॥
यद्वाणीश्रुतिमात्रकेण सुधियां चेतश्चमत्कारिणी
येनामुद्रि विरोधिनां मुखकुलं स्वोद्गारकौतूहलैः ।
तेनाज्ञानघनान्धकारपटलप्रक्षेपदीपाङ्कुरं
व्यातेने कृतिनां कृते सुकृतिना काव्यं शिवस्वामिना ॥ ४६ ॥
विदितबहुकथार्थश्चित्रकाव्योपदेष्टा यमककविरगम्यश्चारुसन्दानभाणी ।
अनुकृतरघुकारोऽभ्यस्तमेण्ठप्रचारो जयति कविरुदारो दण्डिदण्डः शिवाङ्कः ॥४७॥

इति स्तोत्राह्निकाङ्कस्य काश्मीरकस्य भट्टश्रीशिवस्वामिनः कृतौ
कप्फिणाभ्युदये महाकाव्ये शिवाङ्केऽभ्युदयलाभो
नाम विंशतितमः सर्गः ।

---

॥ समाप्तोऽयं ग्रन्थः ॥

---

43c,M साधुसौधं for शुद्धिसौधं
d,N चान्द्री for साध्वी
44a,N हर्म्येण धर्म्यात् for धर्म्येण धर्म्या
b,M मध्ये for धीमन् ; M repeats मध्ये
M प्रेषणं for अध्येषणां
c,M भट्टाचार्यस्वामिजेन for भट्टार्कस्वाम्यात्मजेन
45a,M अकस्मात् for काश्मीरं; वृद्धिः for शुद्धिं
b,M प्राप्ता काले for प्राप्तात् प्रालेय
c,M सतां for कल्पतां
M प्राणिप्राणाः प्राणिनः for the above.
46,N omits. In M it is written before the colophon.
47 M omits. In N it is written after the colophon which ends with समाप्तं काव्यमिदम् । See the note on the works of the author in the Introduction.
The following stanza comes after the colophon in M and N and gives the volume of the poem in the language of the scribes :—
ग्रन्थः सहस्रमेकं सप्तशताभ्यधिकमधिकधीमद्भिः ।
अपि वर्णाः षड्विंशतिरिति गणितः कप्फिणाभ्युदयः ॥

## कविकाव्यनामगर्भकचम् ( सर्ग १८, श्लोक १४७ )



लक्ष्मीकल्पननाशितः कलिनिशामित्रे स्थितोऽभ्युद्यमे
पुण्याकिङ्कितसूतिरञ्जलिरसास्वादप्रसादव्रती ।.
निर्वाणानुगुणाकृतिर्ज्वलितया वक्त्रश्रिया यः परे
रेमे शीलपथे पुपोष नियमे मेधामतीते सरे ॥

॥ सर्ग १८, श्लोक १४७ ॥

(१) अत्राङ्कः काव्यनाम तृतीयचक्रे—कफि(ष्फि)णाभ्युदयः
(२) अत्राङ्कः कविनाम चतुर्थचक्रे—शिवस्वामिकृति (:)

( ग्रन्थकर्तुः प्रशस्तिः )

विद्याशाली शीलशोभासुभिक्षो भिक्षाचार्यश्चन्द्रमित्राभिधोऽभूत् ।
बौद्धी बुद्धिर्यं श्रिता शुद्धिसौधं सौधं साध्वी चन्द्रिकेवोच्चचार ॥ ४३ ॥

प्रेष्ठाद् गोष्ठीधर्मधर्म्येण धर्म्यां धीमन्मध्येऽध्येषणां प्राप्य तस्मात् ।
भट्टार्कस्वाम्यात्मजेन प्रणिन्ये सूक्तिः सक्तश्रीः शिवस्वामिनेयम् ॥ ४४ ॥

मध्येकाश्मीरं शुद्धिमाह्लादकत्वं प्रासात्प्रालेयस्पर्धयेवाथ वृद्धिम् ।
काव्यात्कल्मषोऽस्मात् कल्पतां पुण्यराशिः प्राणिप्राणानां प्रीणनश्रीः शिवाय ॥४५॥

यद्वाणीश्रुतिमात्रकेण सुधियां चेतश्चमत्कारिणी
येनामुद्रि विरोधिनां मुखकुलं स्वोद्गारकौतूहलैः ।
तेनाज्ञानघनान्धकारपटलप्रक्षेपदीपाङ्कुरं
व्यातेने कृतिनां कृते सुकृतिना काव्यं शिवस्वामिना ॥ ४६ ॥

विदितबहुकथार्थश्चित्रकाव्योपदेष्टा यमककविरगम्यश्चारुसन्दानभाणी ।
अनुकृतरघुकारोऽभ्यस्तमेण्ठप्रचारो जयति कविरुदारो दण्डिदण्डः शिवाङ्कः ॥४७॥

इति स्तोत्राह्निकाङ्कस्य काश्मीरकस्य भट्टश्रीशिवस्वामिनः कृतौ
कप्फिणाभ्युदये महाकाव्ये शिवाङ्केऽभ्युदयलाभो
नाम विंशतितमः सर्गः ।

॥ समाप्तोऽयं ग्रन्थः ॥

---

43c,M साधुसौधं for शुद्धिसौधं
d,N चान्द्री for साध्वी
44a,N हर्म्येण धर्म्यात for धर्म्येण धर्म्यां
b,M मध्ये for धीमन् ; M repeats मध्ये
M प्रेषणं for अध्येषणां
c,M भट्टाचार्यस्वामिजेन for भट्टार्कस्वाम्यात्मजेन
45a,M अकस्मात for काश्मीरं; वुद्धिः for शुद्धिं
b,M प्राप्ता काले for प्रासात प्रालेय
c,M सतां for कल्पतां
M प्राणिप्राणाः प्राणिनः for the above.
46,N omits. In M it is written before the colophon.
47 M omits. In N it is written after the colophon which ends with समाप्तं काव्यमिदम्। See the note on the works of the author in the Introduction.
The following stanza comes after the colophon in M and N and gives the volume of the poem in the language of the scribes :—
ग्रन्थः सहस्रमेकं सप्तशताभ्यधिकमधिकधीमद्भिः ।
अपि वर्णाः षड्विंशतिरिति गणितः कप्फिणाभ्युदयः ॥

कविकाव्यनामगर्भक्रचम् ( सर्ग १८, श्लोक १४७ )




लक्ष्मीकल्पननाशितः कलिनिशामित्रे स्थितोऽभ्युद्यमे
पुण्याफिङ्कितसूतिरञ्जलिरसास्वादप्रसादव्रती ।
निर्वाणानुगुणाकृतिर्ज्वलितया वक्रश्रिया यः परे
रेमे शीलपथे पुपोष नियमे मेधामतीते सरे ॥

॥ सर्ग १८, श्लोक १४७ ॥

(१) अत्राङ्कः काव्यनाम तृतीयचक्रे—कफि(ष्फि)णाभ्युदयः
(२) अत्राङ्कः कविनाम चतुर्थचक्रे—शिवस्वामिकृति (:)

### गोमूत्रिकाबन्धः (सर्ग १८, श्लोक ४८)

प्र ध ने धि कृ ता यो धा वि द धु र्जे य सा ध नम्



क्रो ध ने धि कृ ता बा धा स्वा द नै र्जे य सा ध नम्

प्रधनेऽधिकृता योधाविदधुर्जयसाधनम् ।
क्रोधनेऽधिकृताबाधास्वादनैर्जयसाधनम् ॥१८, ४८॥

### गोमूत्रिकाबन्धः सर्ग (१८, श्लोक ६७)

सो थ से ना द्वि षो वी क्ष्य द्र व न्ती रि त्य वो च त



म थ ने ना मि षो ल क्ष्य स्र व द्भू रि त्य वो च त

सोऽथ सेनाद्विषो वीक्ष्य द्रवन्तीरित्यवोचत ।
मथनेनामिषो लक्ष्यस्रवद्भूरित्यवोचत ॥१८, ६७॥

### गोमूत्रिकाबन्धः (सर्ग १८, श्लोक ८८)

से ना न्या मे व मु च्चै र भि द धु षि गि रं धी र ता रा ज मा नैः



मा ना रा मे व मु ग्धै र स द रु षि चि र क्रू र धी रा ज मा नैः

आ कू तैः शौ र्य यो गै र ज नि क र क रा भा सि त त्रा स मो क्षम्



आ या तै र्व र्य वे गै र ज नि क र क रा भा सि त त्रा स मो क्षम्

सेनान्यामेवमुच्चैरभिदधुषि गिरं धीरताराजमानै-
राकूतैः शौर्ययोगैरजनिकरकराभासितत्रासमोक्षम् ।
मानारामे वमुग्धैरसदरुषि चिरं क्रूरधीराजमानै-
रायातैर्वर्यवेगैरजनि करकराभासितत्रासमोक्षम् ॥१८, ८८॥

( गोमूत्रिकोऽयुक्पादयमकः )

पद्मबन्धः ( सर्ग १८, श्लोक ७४ )




यानवार्ता सती गेया यागेतीवनसाव्यया ।
याव्यसा किन्तु यामाया यामाया यनवानया ॥१८, ७४॥

गोमूत्रिकाबन्धः (सर्ग १८, श्लोक ४८)




प्रधनेऽधिकृता योधाविदधुर्जयसाधनम् ।
क्रोधनेऽधिकृताबाधास्वादनैर्जयसाधनम् ॥१८, ४८॥

गोमूत्रिकाबन्धः सर्ग (१८, श्लोक ६७)




सोऽथ सेनाद्विषो वीक्ष्य द्रवन्तीरित्यवोचत ।
मथनेनामिषो लक्ष्यस्रवद्भूरित्यवोचत ॥१८, ६७॥

गोमूत्रिकाबन्धः (सर्ग १८, श्लोक ८८)







सेनान्यामेवमुच्चैरभिदधुषि गिरं धीरताराजमानै-
राकूतैः शौर्ययोगैरजनिकरकराभासितत्रासमोक्षम् ।
मानारामे वमुग्धैरसदरुषि चिरं क्रूरधीराजमानै-
रायातैर्वर्यवेगैरजनि करकराभासितत्रासमोक्षम् ॥१८, ८८॥

( गोमूत्रिकोऽयुक्पादयमकः )

पद्मबन्धः ( सर्ग १८, श्लोक ७४ )




यानवार्ता सती गेया यागेतीवनसाव्यया ।
याव्यसा किन्तु यामाया यामाया यनवानया ॥१८, ७४॥

प्रकारान्तरेण स एव पद्मबन्धः




यानवार्ता सती गेया यागेतीवनसाव्यया ।
याव्यसा किन्तु यामाया यामाया यनवानया ॥१८, ७४॥

### मुरजबन्धः (सर्गः १८, श्लोक ५९)




आररासधराधर्वा शूरराद्धवरासवा।
वासरावसराद्स्ता धूसरासधराधरात् ॥ १८,५९ ॥

---

### मुरजबन्धः ( सर्ग १८, श्लोक ६१ )




सैनिका राजका रुष्टा मानिका भायका रुचा।
चारुकायप्रकारस्था गुरुका राजकारवः ॥ १८,६१ ॥

प्रकारान्तरेण स एव पद्मबन्धः




यानवार्ता सती गेया यागेतीवनसाव्यया ।
याव्यसा किन्तु यामाया यामाया यनवानया ॥१८, ७४॥

मुरजबन्धः (सर्गः १८, श्लोक ५९)




आररासधराधर्वा शूरराद्धवरासवा ।
वासरावसरादस्ता धूसरासधराधरात् ॥ १८,५९ ॥

---

मुरजबन्धः ( सर्ग १८, श्लोक ६१ )




सैनिका राजका रुष्टा मानिका भायका रुचा ।
चारुकायप्रकारस्था गुरुका राजकारवः ॥ १८,६१ ॥

प्रकारान्तरेण स एव पद्मबन्धः




यानवार्ता सती गेया यागेतीवनसाव्यया ।
याव्यसा किन्तु यामाया यामाया यनवानया ॥१८, ७४॥

मुरजबन्धः (सर्गः १८, श्लोक ५९)




आररासधराधर्वा शूरराद्धवरासवा ।
वासरावसराद्स्ता धूसरासधराधरात् ॥ १८,५९ ॥

---

मुरजबन्धः ( सर्ग १८, श्लोक ६१ )




सैनिका राजका रुष्टा मानिका भायका रुचा ।
चारुकायप्रकारस्था गुरुका राजकारवः ॥ १८,६१ ॥

(काञ्चीबन्धः। सर्ग १८, श्लोक १२९)




(काञ्चीबन्धः। सर्ग १८, श्लोक १३०)




वासरोवीर्यसूर्यस्य सरो धैर्योत्पलश्रियाम् ।
वासरोद्धा रणग्रामे सरोपाद्विद्विषामभूत् ॥१८, १२९॥
महारथवरैरूढे स राजा बलिमुद्युते ।
उच्चैरथहयै रूढे तद्राजावभिदिद्युते ॥१८, १३०॥

अर्द्धभ्रमकः ( सर्ग १८, श्लोक ८७ )

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ग | ज | रा | ज | क | रा | वे | शे |
| ज | य | ज्या | व | र्द्धि | ता | र | वे |
| रा | ज्या | शा | म | ह | तां | ता | रा |
| ज | व | म | ध्य | म | ह | र्द्धि | क |

गजराजकरावेशे जयज्यावर्द्धितारवे ।
राज्याशामहतान्ताराजवमध्यमहर्द्धिक ॥ १८,८७॥

(काञ्चीबन्धः । सर्ग १८, श्लोक १२९)




(काञ्चीबन्धः । सर्ग १८, श्लोक १३०)




वासरोवीर्यसूर्यस्य सरो धैर्योत्पलश्रियाम् ।
वासरोद्धा रणग्रामे सरोपाद्विद्विपामभूत् ॥१८, १२९॥
महारथवरैरूढे स राजा बलिमुद्युते ।
उच्चैरथहयै रूढे तद्राजावभिदिद्युते ॥१८, १३०॥

अर्द्धभ्रमकः (सर्ग १८, श्लोक ८७)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ग | ज | रा | ज | क | रा | वे | शे |
| ज | य | ज्या | व | र्द्धि | ता | र | वे |
| रा | ज्या | शा | म | ह | तां | ता | रा |
| ज | व | म | ध्य | म | ह | र्द्धि | क |

गजराजकरावेशे जयज्यावर्द्धितारवे ।
राज्याशामहतान्ताराजवमध्यमहर्द्धिक ॥ १८,८७ ॥

प्रकारान्तरेण स एव अर्द्धभ्रमकः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ग | ज | रा | ज | क | रा | वे | शे |
| ज | य | ज्या | व | द्धि | ता | र | वे |
| रा | ज्या | शा | म | ह | तां | ता | रा |
| ज | व | म | ध्य | म | ह | द्धि | क |
| क | द्धि | ह | म | ध्य | म | व | ज |
| रा | ता | तां | ह | म | शा | ज्या | रा |
| वे | र | ता | द्धि | व | ज्या | य | ज |
| शे | वे | रा | क | ज | रा | ज | ग |

गजराजकरावेशे जयज्यावर्द्धितारवे ।
राज्याशामहतान्ताराजवमध्यमर्द्धिक ॥१८, ८७॥

सर्वतोभद्रः (सर्ग १८ श्लोक ८५)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| या | मे | म | ता | ता | म | मे | या |
| मे | हि | दा | न | न | दा | हि | मे |
| म | दा | व | हा | हा | व | दा | म |
| ता | न | हा | स | स | हा | न | ता |
| ता | न | हा | स | स | हा | न | ता |
| म | दा | व | हा | हा | व | दा | म |
| मे | हि | दा | न | न | दा | हि | मे |
| या | मे | म | ता | ता | म | मे | या |

या मे मता ताममेयामेहि दाननदाहिमे ।
मदावहा हावदाम तानहाससहानता ॥ १८,८५ ॥

प्रकारान्तरेण स एव अर्द्धभ्रमकः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ग | ज | रा | ज | क | रा | वे | शे |
| ज | य | ज्या | व | र्द्धि | ता | र | वे |
| रा | ज्या | शा | म | ह | तां | ता | रा |
| ज | व | म | ध्य | म | ह | र्द्धि | क |
| क | र्द्धि | ह | म | ध्य | म | व | ज |
| रा | ता | तां | ह | म | शा | ज्या | रा |
| वे | र | ता | र्द्धि | व | ज्या | य | ज |
| शे | वे | रा | क | ज | रा | ज | ग |

गजराजकरावेशे जयज्यावर्द्धितारवे ।
राज्याशामहतान्ताराजवमध्यमर्द्धिक ॥१८, ८७॥

सर्वतोभद्रः (सर्ग १८ श्लोक ८५)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| या | मे | म | ता | ता | म | मे | या |
| मे | हि | दा | न | न | दा | हि | मे |
| म | दा | व | हा | हा | व | दा | म |
| ता | न | हा | स | स | हा | न | ता |
| ता | न | हा | स | स | हा | न | ता |
| म | दा | व | हा | हा | व | दा | म |
| मे | हि | दा | न | न | दा | हि | मे |
| या | मे | म | ता | ता | म | मे | या |

या मे मता ताममेयामेहि दाननदाहिमे ।
मदावहा हावदाम तानहाससहानता ॥ १८,८५ ॥

# PRATIKA INDEX

*N. B.* The Roman figures indicate the canto, and the Arabic figures indicate the stanzas.

# PRATIKA INDEX

*N. B.* The Roman figures indicate the canto, and the Arabic figures indicate the stanzas.

# BIBLIOGRAPHY

Ancient Indian Historical Tradition by F. E. Pargiter (1922).

Avadānaśataka, ed. J. S. Speyer, Bibliotheca Buddhica III, trans. M. Léon Feer in Annales du Musée Guimet, Tome 18.

Barabudur by J. N. Krom.

The Bodhisattva Doctrine by Haradayal (1932).

Buddhacarita, ed. E. B. Cowell (1893).

Buddhaghoṣa's Parables by T. Rogers (1870).

Buddhist Legends by E. W. Burlingame, H. O. S. Vols. 28, 29.

A descriptive Catalogue of MSS. Government Oriental MSS. Library, Madras, Vols. IV, XX.

The Commentary on the Dhammapada (P. T. S.).

The Conception of Buddhist Nirvāṇa by Th. Stcherbatsky (1927).

Daśāvatāra-carita of Kṣemendra (Kāvyamālā No. 26).

Early History of India by V. A. Smith (1914).

The Glories of Magadha by J. N. Samaddar (1922).

Haravijaya of Ratnākara (Kāvyamālā No. 22).

Handbook of Chinese Buddhism by E. J. Eitel (1888).

History of Sanskrit Literature by A. B. Keith (1928).

Indian Palaeography by Bühler—Indian Antiquary, Vol. xxiii, Appendix.

Index to the names in the Mahābhārata by S. Sörensen (1904).

Kavikaṇṭhābharaṇa of Kṣemendra (Kāvyamālā No. 4).

Kavīndravacanasamuccaya by F. W. Thomas, Bibliotheca Indica, New series, No. 1309.

Kāvyaprakāśa of Mammaṭa (A. S. S. No. 66).

# BIBLIOGRAPHY

Ancient Indian Historical Tradition by F. E. Pargiter (1922).

Avadānaśataka, ed. J. S. Speyer, Bibliotheca Buddhica III, trans. M. Léon Feer in Annales du Musée Guimet, Tome 18.

Barabudur by J. N. Krom.

The Bodhisattva Doctrine by Haradayal (1932).

Buddhacarita, ed. E. B. Cowell (1893).

Buddhaghoṣa's Parables by T. Rogers (1870).

Buddhist Legends by E. W. Burlingame, H. O. S. Vols. 28, 29.

A descriptive Catalogue of MSS. Government Oriental MSS. Library, Madras, Vols. IV, XX.

The Commentary on the Dhammapada (P. T. S.).

The Conception of Buddhist Nirvāṇa by Th. Stcherbatsky (1927).

Daśāvatāra-carita of Kṣemendra (Kāvyamālā No. 26).

Early History of India by V. A. Smith (1914).

The Glories of Magadha by J. N. Samaddar (1922).

Haravijaya of Ratnākara (Kāvyamālā No. 22).

Handbook of Chinese Buddhism by E. J. Eitel (1888).

History of Sanskrit Literature by A. B. Keith (1928).

Indian Palaeography by Bühler—Indian Antiquary, Vol. xxiii, Appendix.

Index to the names in the Mahābhārata by S. Sörensen (1904).

Kavikaṇṭhābharaṇa of Kṣemendra (Kāvyamālā No. 4).

Kavīndravacanasamuccaya by F. W. Thomas, Bibliotheca Indica, New series, No. 1309.

Kāvyaprakāśa of Mammaṭa (A. S. S. No. 66).

Kāvyādarśa of Daṇḍin, ed. O. Böhtlingk (1890).

Kashmir Śaivism by J. C. Chatterjee (1914).

Lalitavistara, ed. S. Lefmann; ed. in Bibliotheca Indica by Rajendra Lal Mitra.

Literary History of Sanskrit Buddhism by G. K. Nariman (1920).

La legende de l'Empereur Açoka by Przyluski.

A Manual of Indian Buddhism by H. Kern (1896).

Miscellaneous Essays by H. T. Colebrooke, Vol. II.

Māgha, ed. P. Durgāprasāda and P. Śivadatta (1902).

Oriyā Alphabet by Mcpherson.

Outlines of Mahāyāna Buddhism by D. T. Suzuki (1907).

Padacandrikā of Rāyamukuṭa, ed. A. Borooah (2 pts.) 1887.

Rājataraṅgiṇī of Kalhaṇa, ed. and translated by A. Stein (Text 1892 and Trans. 1900).

Report on a search of Sanskrit MSS. (1877) by Bühler.

Report on a search for Sanskrit MSS. 1897, (1895–1900) by Haraprasāda Śāstrin.

Report on a search of Sanskrit and Tamil MSS. (1893–1894) by Śeṣagiri Śāstrin.

Saddharmapuṇḍarīka, ed. H. Kern and B. Nanjio 1912.

The Sanskrit Buddhist Literature of Nepal by Rajendra Lal Mitra (1882).

Sākya or Buddhist origins by Mrs. Rhys Davids (1931).

Saundarānanda of Aśvaghoṣa, ed. E. H. Johnston (1928).

Śārṅgadharapaddhati of Śarṅgadhara ed. P. Peterson (1888).

Subhāṣitāvalī of Vallabhadeva ed. P. Peterson (1886).

Subhāṣitaratnabhāṇḍāgāra compiled by K. P. Parab (1911).

Saduktikarṇāmṛta of Śrīdharadāsa, Bibliotheca Indica New Series vol. 224.

The Śāradā Alphabet, J. R. A. S. 1916.

Sanskrit Prosody by A. Borooah (1882).

Ṭīkāsarvasva of Sarvānanda, ed. in T. S. S. by T. Gaṇapati Śāstrin.

Telugu Language by Henry Morris (1820).

Vyākhyāsudhā on Amarakośa ed. P. Śivadatta (1929).

On Yaun Chwang by T. Watters (1904–5).

Recent Developments in Textual Criticism by A. C. clark (1914).

Textual criticism by P. Postgate, Litt. D. in A Companion to Latin studies, 1921.

An Introduction to Latin Textual Emendation by W. M. Lindsay (1896).

The Descent of Manuscripts by A. C. clark (1918).

The Application of a few canons of Textual and higher criticism to Kālidāsa's Śakuntalā by S. K. Belvalkar in Asia Major, 1925.

A companion to Classical Texts by F. W. Hall (1913).

Textual criticism of Inscriptions by Roland G. Kant, Pennsylvania (1920).

Textual criticism in Encyclopaedia Brittanica 11th edition, Vol 26, pp. 708–15.

Textual criticism by Sir Richard C. Jebb, Litt., D. O. M., in A Companion to Greek Studies (pages 720–733), 1916.

On Textual criticism in the Introduction to the Ādiparvan of the Mahābhārata, by Dr. V. S. Sukthankar.

---

Kāvyādarśa of Daṇḍin, ed. O. Böhtlingk (1890).
Kashmir Śaivism by J. C. Chatterjee (1914).
Lalitavistara, ed. S. Lefmann; ed. in Bibliotheca Indica by Rajendra Lal Mitra.
Literary History of Sanskrit Buddhism by G. K. Nariman (1920).
La legende de l'Empereur Açoka by Przyluski.
A Manual of Indian Buddhism by H. Kern (1896).
Miscellaneous Essays by H. T. Colebrooke, Vol. II.
Māgha, ed. P. Durgāprasāda and P. Śivadatta (1902).
Oriyā Alphabet by Mcpherson.
Outlines of Mahāyāna Buddhism by D. T. Suzuki (1907).
Padacandrikā of Rāyamukuṭa, ed. A. Borooah (2 pts.) 1887.
Rājataraṅgiṇī of Kalhaṇa, ed. and translated by A. Stein (Text 1892 and Trans. 1900).
Report on a search of Sanskrit MSS. (1877) by Bühler.
Report on a search for Sanskrit MSS. 1897, (1895–1900) by Haraprasāda Śāstrin.
Report on a search of Sanskrit and Tamil MSS. (1893–1894) by Śeṣagiri Śāstrin.
Saddharmapuṇḍarīka, ed. H. Kern and B. Nanjio 1912.
The Sanskrit Buddhist Literature of Nepal by Rajendra Lal Mitra (1882).
Sākya or Buddhist origins by Mrs. Rhys Davids (1931).
Saundarānanda of Aśvaghoṣa, ed. E. H. Johnston (1928).
Śārṅgadharapaddhati of Śarṅgadhara ed. P. Peterson (1888).
Subhāṣitāvalī of Vallabhadeva ed. P. Peterson (1886).
Subhāṣitaratnabhāṇḍāgāra compiled by K. P. Parab (1911).
Saduktikarṇāmṛta of Śrīdharadāsa, Bibliotheca Indica New Series vol. 224.
The Śāradā Alphabet, J. R. A. S. 1916.
Sanskrit Prosody by A. Borooah (1882).
Ṭīkāsarvasva of Sarvānanda, ed. in T. S. S. by T. Gaṇapati Śāstrin.
Telugu Language by Henry Morris (1820).
Vyākhyāsudhā on Amarakośa ed. P. Śivadatta (1929).
On Yaun Chwang by T. Watters (1904–5).
Recent Developments in Textual Criticism by A. C. clark (1914).
Textual criticism by P. Postgate, Litt. D. in A Companion to Latin studies, 1921.
An Introduction to Latin Textual Emendation by W. M. Lindsay (1896).

The Descent of Manuscripts by A. C. clark (1918).

The Application of a few canons of Textual and higher criticism to Kālidāsa's Śakuntalā by S. K. Belvalkar in Asia Major, 1925.

A companion to Classical Texts by F. W. Hall (1913).

Textual criticism of Inscriptions by Roland G. Kant, Pennsylvania (1920).

Textual criticism in Encyclopaedia Brittanica 11th edition, Vol 26, pp. 708–15.

Textual criticism by Sir Richard C. Jebb, Litt., D. O. M., in A Companion to Greek Studies (pages 720–733), 1916.

On Textual criticism in the Introduction to the Ādiparvan of the Mahābhārata, by Dr. V. S. Sukthankar.

---